ओ ३ म्

(विशेषतो बालोपयोगी)

# विधिसारसंग्रहः

राजकीयपाठशालाभूतपूर्वमुख्याध्यापक-

कल्लेत्युपाह्व-

पंडित नाथरामशास्त्रि-संगृहीतः ॥

सोऽयम्

पं० माधवराम-केशवरामाभ्यां

श्रीनगरस्थ-कोठीबागान्तरे,

मार्कण्टायल मुद्रणालये मुद्रापितो

भूदेवमनस्तोषाय भूयात् ॥



विक्रमसंवत् १९९९ । श्रावणमासः ॥

ओ३म्

(विशेषतो बालोपयोगी)

# विधिसारसंग्रहः ॥

राजकीयपाठशालाभूतपूर्वमुख्याध्यापक-

कल्लेत्युपाह्व-

पंडित नाथरामशास्त्रि-संगृहीतः ॥

सोऽयम्

पं० माधवराम-केशवरामाभ्यां

श्रीनगरस्थ-कोठीबागान्तरे,

मार्कण्टायल मुद्रणालये मुद्रापितो

भूदेवमनस्तोषाय भूयात् ॥

विक्रमसंवत् १९९९ । श्रावणमासः ॥

# सूचीपत्रम् ।

उपहारीकृतस्यास्य ग्रन्थस्य स्वीकृतौ मुदा । आविष्कुर्वन्तु करुणां करुणार्द्रहृदो बुधाः ॥ १ ॥ दोषोऽत्र कोपि मे चेत्स्याद्दोषज्ञाः क्षान्तिसागराः। शान्ता दान्ता निजौदार्यवित्ताः क्षाम्यन्तु तान्मम ॥ २॥ अतिवेलाभिमानाग्निदाहज्वरविकारिणः । पामरा अवजानन्तु हानिर्नात्र ममाद्रुहः ॥ ३ ॥ सन्तुष्टः कामधुक्कोटिकामदोऽनेन कर्मणा । मत्पितृणां त्रिलोकीशो वासुदेवोऽस्तु मुक्तये ॥ ४ ॥ न किमु न लभ्यते भगवति त्वयि विश्वपतौ सुकृतसमर्पणेन भवबन्धनमुक्तिरतैः। अविकलभक्तिरक्तपरमार्तिहरेश्वर मे पितृगणमच्युतोद्धर परं नय धाम निजम् ॥ ५॥ पाशर्णत्रयमुक्तये न सुकृतं विष्णो मयात्रार्जितं तद्बद्धो भवबन्धबद्धशरण भ्रष्टो भवाम्भोनिधौ । तच्चेष्टस्व ममाशु मुक्त्यधिगमे पाशाकुलेभेन्द्रवद् विप्राणां कुलदेव मां स्वसविधेऽनाथं स्वनाथं क्रियाः ॥ ६ ॥

नाहं प्राक्तनजन्मनि क्वचिदपि त्वत्कीर्तिलीलास्रवत्, पीयूषस्य चमत्कृतिं जनिहरां सम्भुक्तवान्मुक्तिदाम् । तद् हाहा पतितोऽस्मि दुस्तरभवाम्भोधौ शरण्यार्तिहन्, कृष्णेति प्रलपन्मुहुर्मुहुरतो मामुद्धराद्य प्रभो ॥१॥ पाषाणप्रकृतिश्च गौतमवधूः सन्तारिता सङ्कटात्, भूमन्दुष्कृततूलराशिदहन स्वीयाङ्घ्रिधूलीकणैः । दुर्वारात्कठिनादमू मुच इनं ग्राहाद्गजानां हरे, मन्मुक्तौ भगवञ् श्रमोऽस्ति किमु ते यन्मौनमुद्राश्रिता ॥ २ ॥ आत्मानं पितरौ प्रियामनुचरान्पुत्रान्प्रियान्बान्धवान्, सोदर्यान्सुकृतं प्रतार्य च मया मूढेन यत्सञ्चितम् । तद् छिद्रभिर्धनमद्य लुण्ठ्यत इदं यत्रेक्षमाणस्य मे, हा कृष्णेहि तदीदृशान्तसमये कारुण्यसद्भावन ॥ ३ ॥ यत्रावेहमि

मातृपितृसुहृदस्ते भ्रातरो ज्ञातयः, पुत्रास्तेऽनुचरा धनं सहचरी त्यद्यन्ति मां दूरतः । वाताद्यैस्त्रिभिरेव तत्र कुपितैः संरुद्धकण्ठं प्रभो, श्रीकृष्णेत्य खगेन्द्रवाहन कृपासारामृतैः सिञ्च माम् ॥ ४ ॥ हा कृष्णाच्युत माधवार्तशरण त्रैलोक्यरक्षापर, मग्नं तारय पारयाशु करुणासिन्धौ भवाब्धौ चिरात् । स्वाङ्के लालय पालयार्तमरतिं मामन्तकालेऽसमे, सर्वापत्समुदायनिघ्नहृदयं त्वं रक्ष रक्ष प्रभो ॥ ५ ॥ त्वत्तः कोऽस्ति परः प्रभो प्रभुतमो दाहार्तिनिर्वापणे, भक्तानां भवदाहदग्धमनसामार्तिघ्नधुर्यैश्वर । ज्ञात्वा मां परमापदां पदमलं कालाहिपाशाकुलं, तूर्णं त्वं गरुडाधिरूढ भगवन्नेह्याश्रितं सान्त्वय ॥ ६ ॥ शक्तिर्ह्रासमुपागतेन्द्रियगणे प्रज्ञावसन्ना च मे, कायो जीर्णतरः स्खलन्प्रतिपदं जीनोष्ट्रकल्पाकृतिः । तृष्णैका तरुणायते प्रतिदिनं हा कृष्ण कृष्णान्तकाद्, भीतं मां कृपया स्वया प्रबलया त्वं रक्ष रक्षाधुना ॥ ७ ॥ जीर्णत्वेन समस्तरोगनिचयग्रस्तत्वहेतोरहं, शक्तेर्भ्रंशवशाद्भवाम्यविरतं हा स्पन्दितुं चाक्षमः । तन्मेऽन्ते सविधे भवाशु कृपया कारुण्यवारांनिधे, मूर्ध्न्याधाय निजं कराब्जममृतस्यन्द्यातुरं सान्त्वय ॥ ८ ॥ घोरो दण्डधरः फणाधरकरो यर्ह्यन्तकोऽन्ते मम, कण्ठे क्षेप्स्यति पाशमाशु रसनां स्वां लेलिहानो रुषा । स्वाङ्के लालितविग्रहे मयि तदाविर्भावय प्रेमतो राधारासमपास्य कृष्ण मुरलीनादामृतं मुक्तिदम् ॥ ९ ॥ भुक्तं तद्धि मया, त्वया प्रभवता दत्तं यदद्यावधि, किन्त्वेतावदिदं प्रभोऽद्य भगवन् त्वं प्रार्थ्यसे श्रूयताम् । अन्ते तिष्ठ ममान्तिकेऽक्षिविषयः कन्दर्पकोटिच्छविहारी पीतपटच्छटोऽधरलसद्वंशीधरः श्रीधरः ॥ १० ॥

ॐ

# विधि सारसंग्रहः ॥

ॐ नमो भगवते वासुदेवाय ॥ ॐमित्यन्तः स्फुरति हृदि यत् तद्यदीयं स्वरूपं सर्वापद्भ्यो भवजलनिधेस्तारको यत्प्रणामः । यश्चैश्वर्यादिभिरनुपमो यस्य वासस्त्रिलोक्यां यस्मिंस्त्रैलोक्यमपि परमं धाम यत्तत्प्रपद्ये ॥ १ ॥ महामोहतमिस्रान्ध्यनाशनं धाम यत्परम् । भास्वरं तद्गणेशाख्यं वारं वारं प्रणौम्यहम् ॥ २ ॥ अन्तरायागपंक्तीनां कल्पान्तचण्डवायवः । श्रीगणेशपदद्वन्द्वप्रणामाः सन्तु कामदाः ॥ ३ ॥ प्रणामाः कोटिशः सन्तु श्रीगणेशपदाम्बुजे । यद्ध्यानेनोद्याद्विघ्नशोकौघविलयः क्षणात् ॥ ४ ॥ भक्तप्रत्यूहतर्वालीश्छेत्तुं परश्वधायुधः । भूयात्सिद्धिप्रदो मेऽत्र श्रीगणेशोऽम्बिकात्मजः ॥ ५ ॥ सृष्टिरक्षाप्रलयकृत्कार्यसिद्धिः परात्परे । यस्मिन्विघ्ना सदास्ते स श्रीगणेशोऽस्तु सिद्धिदः ॥ ६ ॥ प्रचण्डदुरितव्याध्याधितापहरणे पटुः । सोमः सोमावतंसो मे शिवायास्तु सदा शिवः ॥ ७ ॥

ॐ यत्पादाब्जनखश्रिया प्रतिहतश्रीकालिकेन्दुः शिवो
देहार्धार्पणतश्च लब्धमहिमा मृत्युं जिगायाजितम् ।
पद्द्वन्द्वार्चनमस्तु सन्ततमिति ब्रह्मादिशीर्षाग्रयगु-
र्यस्या आसनतां, शिवं दिशतु नः सैवश्वरी सा शिवा ॥

[१] यदि पूर्णिमायाममावस्यायां वाऽग्निग्रहणेच्छा स्यात् [अग्निवासाग्निकोष्ठयोरग्न्याधाननक्षत्राणां-उदगयनादेः सत्त्वे] तदायं विधिः । दशम्यां नक्तव्रते एकादश्यां चोपवासे विष्णुपूजादिरतो भवेत् । ततो द्वादशीव्रताहःप्रभाते ब्रह्मकलशपूजां विधाय प्रधानानि दद्यात् ॥ तद्यथा—अग्नये नमः, वायवे नमः इत्यादीनि ६ । अग्निनारयि०, प्रजापते०, । उदग्ने शुचयः०, अग्न पवस्व०, तन्नस्तन्तु०, अग्ने नय०, ॥ पूर्णिमापर्वतन्त्रप्रधानानि । अमावस्याप्रधानानि वा । तद्विष्णोरित्यादयः पञ्चायतनमंत्राः ॥ क्षेत्रस्य पतिना० इत्यादि । पञ्चगव्यस्य मन्त्रितस्य पानम् ॥ कलशपूजां विष्णुपूजापूर्विकां विधायाग्निकर्म कुर्यात् ॥ पूर्वं स्वगृह्योक्तविधिनाऽग्निसाधनं कार्यम् ॥ पात्रं तिलाक्षतैरित्यादि । परिसमुह्य ३ पर्युक्ष्य ३ परिषिच्य ३ ॥ आदौ पञ्च० । पृथक् २ उद्वाहं कुर्यात् । विमुच्य ३ । पुनःपरिसमुह्य० ६ । स्तराः ४ ॥ अग्नये स्वाहा, प्र०, सू०, प्रजा०, ॥ विमुच्य ३ ॥ ततो वैश्वदेवविधिः—परिसमूहनादि० ६ । स्तराः ४ । व्याहृतिहोमः । वैश्वदेवस्य सिद्धस्येत्यादि० । अग्नये स्विष्टकृते स्वाहा । विमुच्य । ततः पर्वतन्त्रं कुर्यात् । प्रतिपदमारभ्य पूर्णिमान्तं, अमावस्यान्तं वा पक्षयागवद्धारणानि । विमुच्य ३ । पुनः परिसमुह्य० पर्युक्ष्य० ६ । याकाचिद्यो० । गोग्रासादि । कलशाच्छिद्रम् । ब्राह्मणभोजनादि ॥

[२] यदि पित्रोः श्राद्धतिथौ पक्षयागसाधनं कर्तव्यं

स्यात्तदा पर्वतन्त्रसाधनविधिना पूर्ववत् उद्वाहं साधयित्वा व्याहृतिं वैश्वदेवादि च सर्वं सम्पाद्याष्टकां कुर्यात् । ततः श्राद्धमारभेत । अन्ते च तिलोदकात्पूर्वं श्राद्धतिथेरारभ्य धारणानि दद्यात् । आगामिन्यां पूर्णिमायाममावस्यायां वा धारणद्वयमेव ॥

अग्न्याधाने विशेषविषयः ।

[३] पत्नयागाकर्तुः (अनाहिताग्नेः) यदि श्राद्धतिथिः प्रतिपत्स्यात्, तच्छ्राद्धं च प्रतिपदि अमावस्यां वा पर्वतन्त्रेण सह प्राप्तं भवेत्, तदाऽऽदावुद्वाहविधिः । ततो धारणचतुष्टयम् । ततः पर्वतन्त्रम् । ततो व्याहृतिवैश्वदेवादिविधिः । ततोऽष्टका । ततः श्राद्धं । पश्चात्तिलोदकात्प्राक् धारणचतुष्टयम् ॥ — तदुक्तम् — "आदौ पर्व सिनीवाल्यां वैश्वदेवं ततः परम् । अष्टकां च ततः कुर्यात्ततः श्राद्धं समाचरेदिति" "पत्नान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततः श्राद्धं समाचरेदिति" ॥ पर्व—पर्वतन्त्रम् । सिनीवाली—अमावस्या ॥ पत्नान्तं कर्म—पर्वतन्त्रम । पिण्डयज्ञ—अष्टकाम् ॥

[४] एवं यदि पत्नयागाकर्तुः प्रतिपत्तिथिश्राद्धे पूर्णिमासम्बन्धः स्यात् (पर्वतन्त्रं श्राद्धं चेतिद्वयं युगपत्स्यात्) तदा आदौ उद्वाहसाधनम् । धारणचतुष्टयम् । व्याहृतिवैश्वदेवादिविधिः । ततोऽष्टका । ततः पर्वतन्त्रम् । ततः श्राद्धम् । तिलोदकात्प्राक् धारणानि चत्वारि तदुक्तम्—

"वैश्वदेवं तु निर्वर्त्य पितृयज्ञस्य साधनम् । अनाहार्यं ततः कुर्यात्ततः श्राद्धं समाचरेदिति" । पितृयज्ञोऽष्टका । अनाहार्यम्—पर्वतन्त्रम् ॥

[५] पञ्चयागकर्तुरपि (आहिताग्नेः) प्रतिपत्तिथिश्राद्धे "आदौपर्वेत्यादि, वैश्वदेवं तु निर्वर्त्येत्यादि च विधिद्वयं स्वयमेवोह्यम् ॥ विशेषस्त्ववश्यमूह्यः ॥

[६] प्रतिपत्तिथौ आद्ये और्ध्वदेहिके (एकादशदिने) यदि अमावस्यासम्बन्धि पञ्चयागदिनमपि स्यात् तदापि "आदौ-पर्व सिनीवाल्यां" इत्युक्तविधिना सर्वं विधेयम् ॥ तद्यथा—उद्वाहादि साधयित्वा, विमुच्य, पुनः परिसमुह्येत्यादि ६ । स्तराः ४ । अग्नये स्वाहा, प्र०, सू०, प्र०, विमुच्य । पुनः परिसमूहनादि ६ । षोडश स्तराः । पञ्चयागं कृत्वा विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । व्याहृतिः वैश्वदेवादिश्च । विमुच्य । पुनः परिसमुह्य ६ । स्तराः १६ । ततोऽष्टका । विमुच्य । पुनः परिसमूहनादि ६ । ततः श्राद्धम् । ब्राह्मणाच्छिद्रानन्तरं विमुच्याग्निं । सव्येन परिसमुह्य पर्युक्षयच ६ । अन्वष्टकां कृत्वा विमुच्य । सव्येन गेहाग्निं परिसमुह्य० ६ । चातुष्कोष्ठाः स्तराः । अग्नये स्वाहा प्रजा० इत्याहुतिद्वयं हुत्वा । विमुच्य । पुनः प-रिसमुह्य पर्युक्ष्य ६ । अचेत्यग्निः० । (इत्थमग्निस्थापनेन द्वादशाहे अष्टकैव केवला कर्तव्येति विचार्यम्) तिलोद-कादिसमाप्तिः ॥ [७] प्रतिपत्तिथौ—एकादशदिवसे

(आद्ये और्ध्वदेहिके) यदि पूर्णिमापर्वतंत्रं च स्यात् तदा "वैश्वदेवं तु निर्वत्य" इत्यादिक्रमेण आदौ उद्वाहः । विमुच्य । परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० इत्याहुतिचतुष्टयं हुत्वा विमुञ्चामि इति ३ ॥ पुनः परिसमूहनादि ६ । वैश्वदेवं कृत्वा विमुच्य ३ । पुनरपि परिसमूहनादि ६ । आदौ पंच० । ततोऽष्टकां कुर्यात् । विमुच्य । परिसमूहनादि ६ । पर्वतन्त्रं समाप्य विमुच्य ३ । पुनः परिसमुह्य पर्युक्ष्य च ६ । श्राद्धमारभेत । ब्राह्मणपूजाच्छिद्रानन्तरं विमुच्याग्निं । सव्येन परिसमुह्य पर्युक्ष्य । अन्वष्टकां कृत्वा । तमग्निं विमुच्य । गेहाग्निं सव्येन, परिसमुह्येत्यादि ६ । स्तराः ४ । अग्नये स्वाहा प्रजापतये स्वाहेत्याहुतिद्वयेन अग्निं द्वितीयदिनार्थं प्रतिष्ठाप्यैव विमुच्य । परिसमुह्य पर्युक्ष्य च ६ ॥ अचेत्यग्निरिति । ततस्तिलोदकादिना श्राद्धसमाप्तिः (द्वादशेऽह्नि अष्टकैव) ॥

[८] (यदि द्वादशेऽह्नि एव प्रतिपत्तिथिः स्यात् तत्रैव पर्वतन्त्रप्राप्तिरपि तदा पूर्णिमानुरूपं अमावस्यानुरूपं च विधिद्वयं वैश्वदेवं तु० आदौ पर्व० इत्यादिक्रमेण स्वयमेवोह्यम्) ॥ तद्यथा— पूंशे प्रशे अत्र यस्य कस्यचित्पत्नयागाकर्तुरेकादशाहःकृत्यमौर्ध्वदेहिकं पूर्णिमायां प्राप्तं, तद्-द्वितीयदिने प्रतिपत्तिथौ सपिण्डीकरणं पर्वतंत्रं च प्राप्तं तदैकादशाहःस्थापिते एवाग्नौ प्रतिपत्पर्वतंत्रं विधेयम् ॥ वैश्वदेवं तु निर्वर्त्यैत्यादिना पूर्वं व्याहृतिवैश्वदेवादि, ततोऽष्टका, ततः पर्वतंत्रम् ।

तिलोदकात्पूर्वं धारणाचतुष्टयं दत्त्वा अग्निं समापयेत् ॥ एवममावस्यासंयोगेऽपि द्वादशदिने आदौ पर्व सिनीवाल्यामित्यादिक्रमः ॥ [६] यदि एकस्मिन्नेव दिने अमावस्यां प्रतिपदो मासिकं पार्वणश्राद्धं पर्वतंत्रं च पञ्चयागकर्तुः प्राप्तं (अंदि प्रदि)। तत्र-आदौ पर्व सिनीवाल्यामित्याद्युक्तक्रमः॥ तद्यथा-पात्रं तिला० इत्यादि। इदंहविः०। सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि- ६ । आदौ पञ्च० । पञ्चयागं कृत्वा त्र्यायुषं विमुच्य । पुनः परिसमूहनादि- ६ । स्तराः ४। वैश्वदेवादि। ततोऽष्टका। विमुच्य । पुनः परिसमुह्य पर्युक्ष्य ६ । ततो मासिकं श्राद्धम् । ब्राह्मणाच्छिद्रं । विमुच्य ३ । सव्येन परिसमूहनादि- ६। ततोऽन्वष्टकादि। गेहाग्नेः परिसमूहनादि-६। स्तराः ४ । धारणाद्वयं । अग्नये स्वा० प्र० स्वा० । विमुच्य । पुनः परिसमुह्य पर्युक्ष्य ६ । अचेत्यग्निः०। ततस्तिलोदकादि सर्वं। कलशाच्छिद्रं । उदकलशं० ॥ तदनु पार्वणश्राद्धे कलशपूजनादि । पात्रंतिला० । नतु निर्दग्धं रक्षो० इति । परिसमूहनादि ६ । स्तराः ४। इदंहविः०। सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६। स्तराः४। वैश्वदेवादि । विमुच्य । पुनः परिसमूहनादि ६ । षोडशस्तराः । अष्टकारम्भः । अन्ते त्र्यायुषं। विमुच्य । पुनः परिसमुह्य पर्युक्ष्य । ततः पार्वणश्राद्धं। तिलोदकादौ विमुच्य । सव्येन । परिसमूहनादि ६। स्तराः ४। अ० स्वाहा

प्र० सू० प्र० । द्वितीयस्यां अ० प्र० सू० प्र० । एवं पूर्णिमान्तं । पूर्णिमायां अ० प्र० । विमुच्य । परिसमुह्य पर्युक्ष्य ६ । तिलोदकं । गोग्रासादि । उदकलशं० ॥

[१०] अथ पूर्णिमायां वैश्वदेवं तु निर्वर्त्येत्यादिक्रमः— यदि पूंदि-प्रदि एकस्मिन्नेव पूर्णिमादिने प्रतिपदः श्राद्धं प्रतिपदो मासिकं पर्वतंत्रं च प्राप्तं तदायंक्रमः-आदौ मासिकश्राद्धे कलशपूजादि । पात्रं तिला० । परिसमूहनादि ६। स्तराः ४ । इदंहविः० । सू० प्रजा० । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवं समाप्य । अष्टकारम्भः । तत्र त्र्यायुषं विमुच्य । परिसमूहनादि ६ । स्तराः १६। पक्षयागारम्भः । अन्ते त्र्यायुषं । विमुच्य । परिसमूहनादि ६ । ततो मासिकश्राद्धं तिलोदकान्तं । विमुच्य । सव्येन परिसमूहनादि ६ । अन्वष्टका । सव्येन गेहाग्नेः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० धारणद्वयं । विमुच्य । परिसमूहनादि ६ । अचेत्यग्निः ० । ततास्तिलोदकादि । कलशाच्छिद्रं । उदकलशमुप० ॥ तदनन्तरं पार्वणश्राद्धं पुनः कलशपूजनात्प्रभृति-पात्रं तिलादतैः० । निर्दग्धं इति न कुर्यात् । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० । विमुच्य । परिसमूहनादि ६ । वैश्वदेवादि । ततोऽष्टका । ततः पार्वणश्राद्धं । तिलोदकात्पूर्वमन्ते धारणानि च इति सर्वं पूर्ववत्सम्पादयेत् ॥

[११] अथ कदाचित् पूंप्र प्रदि द्विदि पक्षयागकर्तुः द्वितीयस्याः श्राद्धं प्रतिपदि

प्राप्तं । तस्मिन्नेव दिने पक्षयागस्यापि प्राप्तिः । तत्रायं विधिः-तद्यथा-पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सु० प्र० स्वाहा । विमुच्य । परिसमूहनादि ६ । आदौ पञ्च० । पूर्वमेव पक्षयागविधिः । अन्ते च त्र्यायुषं० विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सु० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवादि । पुनः परिसमूहनादि ६ । आदौ पंच० । अष्टकां कुर्यात् । विमुच्य । परिसमुहनादि ६ । श्राद्धमारभेत । तिलोदकात्पूर्वं विमुच्य । सव्येन परिसमूहनादि ६ । स्तराः ४ । धारणानि-द्वितीयस्यां अ० प्र० सु० प्र० पुनरेवं तृतीयामारभ्यामावस्यन्तं, अमावस्यां अ० प्र० । विमुच्य । पुनः परिसमुह्य पर्युक्ष्य ६ । अर्चेत्यग्निः । तिलोदकादि सर्वम् ॥ (अत्र वैश्वदेवं तु निर्वर्त्य इति क्रमो न कार्यः । द्वितीयस्याः श्राद्धतिथित्वात् । प्रतिपदश्च पर्वतंत्रतिथित्वात्) ॥

[१२] एवं अंप्र प्रदि द्विदि अत्र द्वितीयस्याः श्राद्धं पक्षयागकर्तुः प्रतिपदि प्राप्तं तस्मिन्नेव दिने पक्षयागश्च । तत्र सर्वोपि क्रमः उपरिलिखितवदेव । (अत्रादौ पर्व सिनीवाल्यामित्युक्तक्रमः स्वयमेवप्रवर्तते) तद्यथा-पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सु० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । पक्षयागं विधाय त्र्यायुषं विमुच्य । पुनः परिसमूहनादि ६ ।

स्तराः ४ । अ० प्र० सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवविधिः । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । अष्टकाविधिः । त्र्यायुषं । विमुच्य । पुनः परिसमुह्य पर्युक्ष्य च । श्राद्धं कुर्यात् । तिलोदकात्पूर्वं विमुच्य । सव्येन परिसमूहनादि ६ । स्तराः ४ । द्वितीयस्यां अ० प्र० सू० प्र० । एवं तृतीयामारभ्य पूर्णिमान्तं, पौर्णमास्यां अग्नये स्वाहा प्रजापतये स्वाहा । विमुच्य । पुनः परिसमुह्य पर्युक्ष्य च तिलोदकं । गोग्रासादि । कलशाच्छिद्रादि सर्वम् ॥

[१३] यदि एकस्यां तिथौ पित्रोः श्राद्धद्वयं प्राप्तं स्यात्, (यथा तृप्र–चदिपंदि) चतुर्थीश्राद्धं चतुर्थ्यां प्राप्तं । पंचमीश्राद्धं च चतुर्थ्यामेव प्राप्तं तदायं क्रमः पञ्चयागकर्तुः–उद्वाहयोग्यस्य वा ॥ तद्यथा– पूर्वं चतुर्थीश्राद्धे–पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सूर्याय स्वाहा प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवविधिः । ततोऽष्टका । श्राद्धं समाप्य तिलोदकात्पूर्वं अ० प्र० इति धारणद्वयं । विमुच्य । पुनः परिसमूहनादि ६ । श्राद्धशेषं समापयेत् ॥ तदनन्तरं पंचमीश्राद्धे नवीनकलशपूजनादि । पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः । सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवादि । विमुच्य । परिसमूहनादि ६ । आदौ पंच० । अष्टका ॥

विमुच्य । पुनः परिसमुह्य पर्युक्ष्य च द्वितीयश्राद्धारम्भः । तिलोदकात्पूर्वं विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । पंचम्यां अ० प्र० सू० प्र० एवं षष्ठ्याः प्रभृति पूर्णिमान्तं अमावस्यन्तं वा । विमुच्य । परिसमुह्य पर्युक्ष्य च । अचेत्यग्निः । श्राद्धसमाप्तिः । पक्षयागाभावे उद्वाहं साधयित्वा तदन्ते धारणचतुष्टयं । पश्चाद्व्याहृतिवैश्वदेवादि । ततोऽष्टका । तदन्ते चतुर्थीश्राद्धं । ततस्तिलोदकादादौ अ० प्र० इति धारणद्वयं । विमुच्य । पुनः परिसमूहनादि ६ । श्राद्धसमाप्तिः ॥ पंचमीश्राद्धे पुनः कलशपूजादि । पात्रं तिला० परिसमूहनादि ६ । स्तराः ४ । सूर्याय स्वाहा । प्र० स्वाहा । विमुच्य । परिसमूहनादि ६ । स्तराः ४ । वैश्वदेवादि । विमुच्य । परिस० ६ । आदौ पंच० । अष्टका । विमुच्य । परिसमूहनादि ६ । पंचमीश्राद्धं । तिलोदकात्पूर्वं विमुच्य । सव्येन परिसमूहनादि ६ । स्तराः ४ । पश्चम्यां अ० प्र० सू० प्र० । विमुच्य । धर्मं देहि० । श्राद्धसमाप्तिः– ॥ [१४] अथ यदि चंग्र, अंदि, प्रदि, इत्यत्र अमावसीश्राद्धं पक्षयागकर्तुः अमावस्यां प्राप्तं तस्मिन्नेवदिने पक्षयागश्च प्राप्तस्तदायं विधिः । पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदंहविः० । सूर्याय० प्रजा० । विमुच्य । वैश्वदेवाद्यारम्भः । ततोऽष्टका । विमुच्य । परिसमुह्य पर्युक्ष्य च । श्राद्धादिक्रिया । तिलोदकादादौ विमुच्य पुनः परिसमूहनादि ६ । स्तराः ४ ।

अ० प्र० सू० प्र० । विमुच्य । पत्त्रयागारम्भः । अग्नये इन्द्राग्निभ्यामिति । आज्यभागान्ते अमावसीप्रधानाहुतयः । ऋतुतिथ्यादिसमाप्तिः । पुनः परिसमूहनादि ६ । स्तराः ४ । प्रतिपदि अ० प्र० सू० प्र० । एवं द्वितीयस्यां । अन्ते पूर्णपञ्चदश्यां अ० प्र० । विमुच्य । परिसमूहनादि ६ । अचेत्यग्निः० । तिलोदकगोग्रासादि सर्वम् ॥ पत्त्रयागाकर्तुस्तूद्वाहं साधयित्वाऽष्टकां च विधाय तिलोदकात्पूर्वं पत्त्रयागः । उद्वाहविशेषस्तु स्वयं विचार्यः । अत्रामावसी श्राद्धतिथिरस्ति । पर्वतंत्रतिथिश्च प्रतिपत् । अतः आदौ पर्व सिनीवाल्यां० इत्यादिविधेर्नावकाशः ॥ (अत्र च प्रतिपत्तिथिरानुषङ्गिकी, तत्सम्बद्धं पर्वतन्त्रं चानुषङ्गिकमेव । अतोऽमावसीतिथिश्राद्धस्य सम्बन्धं विहायौचित्यात्तिलोदकावसर एव पर्वतन्त्रस्य कर्तव्यता) ॥

[१५] अथ यदि पूर्णिमाश्राद्धं पूर्णिमायामेव प्राप्तं । तस्मिन्नेव दिने पर्वतन्त्रं च प्राप्तं । यथा–चंप्र, पूंदि, प्रदि, । अत्रापि सर्वं पूर्ववदेव ॥ अत्र हि पूर्णिमा श्राद्धतिथिः । पर्वतंत्रतिथिश्च प्रतिपदऽतो वैश्वदेवं तु निर्वर्त्येत्यादिविधेर्नावकाशः ॥ तद्यथा— पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । सू० प्र० विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । व्याहृति वैश्वदेवादिकं च कृत्वा विमुच्य पुनः परिसमूहनादि ६ । आदौ पंच० । अष्टकां कुर्यात् । व्यायुषं० विमुच्य ३ । पुनः परिसमुह्य पर्युक्ष्य च श्राद्धमारभेत ।

तिलोदकात्पूर्वमपसव्येनैव अग्निं विमुच्य । सव्येन परिसमूहनादि ६ । स्तराः ४ । पूर्णपञ्चदश्यां अ० प्र० सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । पर्वतन्त्रं कुर्यात् । त्र्यायुषं० । पुनः परिसमूहनादि ६ । स्तराः ४ । प्रतिपदि अग्नये० प्र० सू० प्रजा० एवं द्वितीयामारभ्य, अन्ते चामावस्यां अग्नये स्वाहा प्रजा० । विमुच्य ३ पुनः परिसमुह्य पर्युक्ष्य । अचेत्यग्निः० । तिलोदकादि । श्राद्धसमाप्तिः ॥ उद्वाहे तु अत्र किंचिद्विशेषः-उद्वाहं साधयित्वा धारणानि ४ दत्त्वा वैश्वदेवादि अष्टकां च विधाय श्राद्धमारभेत । तिलोदकात्पूर्वं पर्वतन्त्रं कुर्यात् । अन्ते च धारणानि ४ । विमुच्य । तिलोदकादि श्राद्धसमाप्तिः ॥

[१६] अथ यदि प्रतिपदः श्राद्धममावस्यां प्राप्तं पर्वतन्त्रं च तत्रैव, तदा आदौ पर्व सिनीवाल्यामित्यादिक्रमो ऽवश्यं कर्तव्यः । यतः पर्वतंत्रतिथिरपि प्रतिपदेव । श्राद्धतिथिरपि प्रतिपदेव ॥ एवं पूर्णिमादिने प्रतिपदः श्राद्धं यदि प्राप्तं स्यात् । पर्वतंत्रं च तत्रैव । तदापि तत्र वैश्वदेवं तु निर्वर्त्यैत्यादिक्रमोऽवश्यं कर्तव्यः । अत्र प्रतिपत् श्राद्धतिथिः । पर्वतंत्रतिथिश्च प्रतिपदेव ॥

[१७] यदि चंप्र अंदि प्रदि इत्यत्रामावस्याः श्राद्धं अमावस्यां प्राप्तं, प्रतिपदः श्राद्धमपि अमावस्यामेव प्राप्तं, तदायं क्रमः ॥ — तद्यथा- पत्नयागकर्तुः पूर्वममावस्याः श्राद्धे पात्रं तिलाक्षतैः० परिसमूहनादि ६ । स्तराः ४ ।

इदं हविः० । सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । व्याहृतिः वैश्वदेवादि च । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । अष्टकां समाप्य श्राद्धारम्भः । तिलोदकात्पूर्वं विमुच्य । सव्येन पुनः परिसमूहनादि ६ । स्तराः ४ । अग्नये स्वाहा प्रजा० । विमुच्य । परिसमुह्य पर्युक्ष्य । अचेत्यग्निः० । तिलोदकादिसमाप्तिः ॥ द्वितीयस्य प्रतिपच्छ्राद्धस्य आरम्भः — पुनः कलशादिप्रतिष्ठा । अमावसीपर्वतन्त्रप्रधानानि, अष्टकाप्रधानानि च । पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । आदौ पर्व सिनीवाल्यां० इत्युक्तक्रमेण पर्वतंत्रम् । विमुच्य । पुनः परिसमूहनादि ६ स्तराः ४ । व्याहृतिवैश्वदेवादि । ततोऽष्टका । ततः श्राद्धम् । तिलोदकात्पूर्वं विमुच्य सव्येन परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० । एवं द्वितीयस्यामित्यादि अन्ते च पूर्णपञ्चदश्यां अ० प्र० । विमुच्य । परिसमुह्य पर्युक्ष्य । अचेत्यग्निः० । तिलोदकादि सर्वं समापयेत् ॥ एवमेवात्र पूर्णिमासत्त्वे वैश्वदेवं तु निर्वर्त्यैत्यादिक्रमः कर्तव्यः ॥

[१८] यदि सप्तम्यां पितुः श्रद्धं स्यात् । नवम्यां मातुर्वार्षिकं सपिण्डीकरणश्राद्धं । अत्र यदि पूर्वमेव षष्ठ्यामाशौचमापतेत् । तदा तस्य पर्वतन्त्रकर्तुः प्रतिपद्दिने एकादशेऽह्नि आशौचनिवृत्तौ श्राद्धं मासिकं सपिण्डीकरणं पर्व-

तन्त्रं च युगपत्प्राप्तं। अथात्र को विधिः- अत्रादौ पितुः श्राद्धम्। कलशेऽष्टकाप्रधानानि। पात्रं तिला० परिसमूहनादि ६। स्तराः ४। सू० प्र०। विमुच्य। पुनः परिसमूहनादि ६। स्तराः ४। व्याहृतिवैश्वदेवादि। विमुच्य। अष्टका। विमुच्य। पुनः परिसमूहनादि ६। ततः श्राद्धं, तिलोदकात्पूर्वं अ० प्र० इति धारणद्वयं। विमुच्य। पुनः परिसमूहनादि ६ अचेत्यग्निः ०। तिलोदकादिसमाप्तिः। अनन्तरं सापिण्ड्यात्पूर्वकर्तव्ये मासिके पुनः कलशस्थापनादि। पात्रं तिला०। परिसमूहनादि ६। स्तराः ४। सू० प्र० इति धारणद्वयं। पश्चात् वैश्वदेवविधिः। विमुच्य। पुनः परिसमूहनादि ६। आदौ पंच०। अष्टकां कुर्यात्। विमुच्य। परिसमूहनादि ६। ततो मासिकश्राद्धारम्भः। तिलोदकात्पूर्वमन्वष्टकादि। अ० प्र० स्वाहेति धारणद्वयं। विमुच्य। परिसमूहनादि ६। तिलोदकादि। उदकलशमुपनिधायेति॥ तदनु सपिण्डीकरणश्राद्धमारभेत। अत्र पर्वतन्त्रं कुर्यात्। तद्यथा- पुनः कलशस्थापनं। अष्टकायाः प्रधानानि। अमावस्याः पूर्णिमाया वा प्रधानानि च। कलशपूजादि। पात्रं तिला०। परिसमूहनादि ६। स्तराः ४। इदं हविः०। सू० प्र०। विमुच्य। पुनः परिसमूहनादि ६। स्तराः ४। व्याहृतिवैश्वदेवादि। विमुच्य। पुनः परिसमूहनादि ६। आदौ पंच०। अष्टकां कुर्यात्। विमुच्य। पुनः परिसमूहनादि ६। आदौ पंच०। अमावस्याः

पूर्णिमाया वा पक्षयागः । पूर्णा । विमुच्य । परिसमूह-नादि ६ । ततः सपिण्डीकरणश्राद्धम् । अन्ते अन्वष्टका च । विमुच्य । परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० स्वाहा एवं पक्षान्तं तावद्धारणानि । विमुच्य । पुनः परिसमूहनादि ६ । अचेत्यग्निः० । ततस्तिलोदकादि सर्वम् । उदकलशमुप० ॥ (अत्र अशौचनिवृत्तौ प्रतिप-च्छ्राद्धादितिथिर्नास्ति । सात्वशौचनिवृत्तिनिमित्तिका । अ-तोऽत्र-आदौ पर्व सिनीवाल्यामित्यादिश्लोकद्वयस्य नाव-काशः) ॥ [१६] अथ यदि चंदि पूंदि इत्यत्र पक्षयागकर्तुः पूर्णिमाश्राद्धं चतुर्दश्यां प्राप्तं तदायं क्रमः । पात्रं तिला० परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० स्वाहा । विमुच्य । परिसमूहना-दि ६ । स्तराः ४ । व्याहृतिवैश्वदेवादि । विमुच्य । अष्ट-कारम्भः । श्राद्धान्ते तिलोदकात्पूर्वं पूर्णपञ्चदश्यां अ० प्र० स्वाहा इति अहुतिद्वयमेव । विमुच्य । पुनः परिसमूहना-दि ६ । अचेत्यग्निः० । तिलोदकादि । श्राद्धसमाप्तिः ॥

## अथान्त्येष्टिविधयः ॥

[२०] अथ शुक्लपक्षमृतस्य पक्षयागकर्तुर्विधिः ॥ पात्रं तिला० । निर्दग्धं० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० सू० प्र० स्वाहा । विमुच्च । पुनः परिसमूहना-दि ६ । शवस्नानादि ॥ शुक्लप्रतिपदि पक्षयागं कृत्वा मृतस्य

साग्निकस्यापि एष एव विधिः ॥

[२१] अथ शुक्लपक्षमृतस्य पक्षयागाकर्तुर्विधिः ॥ पात्रं तिला० । परिसमूहनादि ६ । आदौ पंच० । उद्वाहयागत्रयं साधयित्वा विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । धारणानि अग्नये स्वाहा प्र० सू० प्र० इति चत्वारि हुत्वा । विमुच्य । पुनः परिसमूहनादि ६ । शवस्नानादि——

[२२] पक्षयागकर्ता कृष्णपक्षाष्टम्यां अथवा (कृष्णपक्षस्य कस्मिंश्चिद्दिने) मृतश्चेत् स्यात्, तदा कृष्णपक्ष-पक्षयागं कुर्यात् । तद्यथा– पात्रं तिला०। परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ स्तराः ४ । अष्टम्यां अ० प्र० सू० प्र० स्वाहा एवं नवम्यां० दशम्यां एकादश्यां० द्वादश्यां० त्रयोदश्यां० चतुर्दश्यां० अमावस्यां अ० प्र० सू० प्र० स्वाहा विमुच्य नयामि । (अर्थात् मृतितिथिमारभ्य अमावसीमभिव्याप्य चत्वारि २ धारणानि इति) पुनः परिसमूहनादि ६ । आदौ पंच० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्ते भुवोयज्ञस्य० उभावां० ये के च ज्मा० इति प्रधानानि । ऋतुतिथिः । तन्त्रसमाप्तिः । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । धारणानि– प्रतिपदि अ० प्र० सू० प्र० स्वाहा । एवं द्वितीयस्यां० तृतीयस्यां० चतुर्थ्यां० पञ्चम्यां० षष्ठ्यां० सप्तम्यां अ० प्र० सू० प्र० स्वाहा (अत्राष्टमीमृतस्य शुक्ल-

अष्टमीधारणानि न देयानि) (अर्थात् कृष्णपक्षीयमृततिथि-धारणानि हुत्वा शुक्लपक्षीयमृतिदिनधारणानि न देयानि "दद्यात्षष्ठ्याहुतीः क्रमादिति" दर्शनात्) ॥ विमुच्य नयामि । पुनः परिसमूहनादि ६ । शवस्नानादि- ॥

[२३] पक्षयागस्य अकर्ता कृष्णपक्षे मृतश्चेत्स्यात् तत्र विधिः- पात्रं तिला० । परिसमूहनादि ६ । आदौ पंच० । उद्वाहयागत्रयं संसाध्य विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० इति चत्वारि धारणानि हुत्वा विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । मृतितिथेरारभ्यामावसीमभिव्याप्य चत्वारि २ धारणानि दत्वा विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । उत्तरतः सं० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्व० । एवं प्रोक्षामि । आज्यभागान्ते भुवोयज्ञ० उभावां० ये के च ज्मा० । ऋतुतिथ्यादितंत्रसमाप्तिः । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । शुक्लप्रतिपद आरभ्य मृतितिथ्यन्तं (ननु मृत-तिथौ) धारणानि । विमुच्य । पुनः परिसमूहनादि ६ । शवस्नानादि— ॥

[२४] शुक्लपक्षपूर्णिमायां पक्षयागकर्ता पक्षयागकरणं विना पूर्णिमामध्ये मृतः तस्य विधिः- पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । उत्तरतः संस्तीर्णं० । अग्नये अग्नीषोमाभ्यां जुष्टं निर्व० । एवं प्रोक्षामि । आज्यभागान्ते । भुवो० ।

आन्यन्देवो० । युवमेतानि० । प्रतद्विष्णु० । ऋतुतिथ्यादितन्त्रसमाप्तिः । विमुच्य । परिसमूहनादि ६ । धारणानि न दद्यात् । शवस्नानादि— ॥

[२५] यदि तु पक्षयागकर्ता पूर्णिमामध्ये पर्वतन्त्रं कृत्वा मृतः, तस्य पुनः पर्वतंत्रं न कार्यम् । तद्यथा– पात्रं तिला० परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । शवस्नानादि ॥ —( अत्र पूंदि ) ॥

[२६] यदि पूंशे पूंप्र पूर्णिमामध्ये पक्षयागस्य अकर्ता म्रियेत, तस्य विधिः– आदौ उद्वाहयागत्रयं साधयित्वा विमुच्य पुनः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० इत्याहुतिचतुष्टयं हुत्वा विमुच्य । पुनः परिसमूहनादि ६ । शवस्नानादि । ( अत्र पूर्णिमायां पर्वतन्त्रस्य न प्राप्तिः । तत्तु प्रतिपद्यस्ति । अतोऽत्रोद्वाहं कृत्वा पूर्णिमापर्वतंत्रं न क्रियते ॥ )

[२७] यदि पूंदि १२ शुक्लपक्षपूर्णिमाघटिकाः १२ उल्लङ्घ्य प्रतिपत्तिथ्यन्तरे पक्षयागकर्ता पक्षयागं कृत्वा अकृत्वा वा मृतः, तस्य पुनरपि कृष्णपक्षपक्षयागः कार्यः, कृष्णप्रतिपदि मृतत्वात् । तद्यथा– पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । अग्नये इन्द्राग्निभ्यां जुष्टं नि० । एवं प्रो० । आज्यभागान्ते – भुवो० उभा० ये के च० । ऋतुतिथ्यादिसमाप्तिः । विमुच्य । पुनः परिस-

मूहनादि ६ स्तराः ४ । मृततिथिं प्रतिपदमारभ्यामावसी-मभिव्याप्य चत्वारि २ धारणानि दत्त्वा विमुच्य । पुनः परिसमूहनादि ६ शवस्नानादि । ( नात्र शुक्लप्रतिपदो धारणानि पुनर्देयानि । कृष्णप्रतिपदि तु पूर्वं दत्तान्येव ) ॥ अत्र पूर्णिमापक्षयागमकृत्वापि कृष्णप्रतिपदन्तरे मृतस्य कृष्णपक्ष-पक्षयाग एव कर्तव्यः न प्राप्तोपि पूर्णिमापक्षयागः । उक्तं च-एवमनुमत्यां पर्व-तंत्रं कृत्वा ऽसमाप्य वा । कृष्णपक्षश्च ज्ञातश्चेदिन्द्राग्नी जुहुयात्तदा ( अत्र असमाप्य वेत्युक्तम् ) ॥ प्रतिपद्युता पूर्णिमा अनुमती ॥ —

[२८] यदि शुक्लप्रतिपदि पर्वतंत्रदिने पक्षयागस्याकर्ता मृतः, तस्यादौ उद्वाहः साध्यः । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः १६ । ( उद्वाहे कृते अमावसीपर्वतंत्रस्य उचितत्वात् ) उत्तरतः संस्तीर्णे० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्व० । एवं प्रोक्षामि । आज्यभागान्ते-भुवोयज्ञस्य० उभावां० ये के च ज्मा० ऋतुतिथ्यादिसमाप्तिः । विमुच्य । पुनः परिसमूहनादि ६ । शवस्नानम् ।

[२६] यदि कृष्णप्रतिपदि पर्वतंत्रदिने पक्षयागस्य अकर्ता मृतः । तस्य- पात्रं तिला० परिसमूहनादि ६ । आदौ पंच० । उद्वाहः साध्यः । धारणचतुष्टयं देयम् । विमुच्य । पुनरग्नेः परिसमूहनादि ६ । आदौ पंच० । ( पर्वतंत्रदिनत्वात् शुक्लपक्षपक्षयागः कार्यः ) अग्नये अग्नीषो-

माभ्यां निर्वपामि । एवं प्रोक्षामि । आज्यभागान्ते-भुवो० आन्यन्दिवो० युवमेतानि० प्रतद्विष्णु० । तन्त्रसमाप्तिः । पुनः परिसमूहनादि ६ । आदौ पंच० । (शुक्लगतिरानेतव्या । अतः कृष्णपक्षयागोपिसमाप्तव्यः) उत्तरतः० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्वपामि । एवं प्रोक्षामि० । आज्यभागान्ते-भुवो० उभावां० ये के च० । ऋतुतिथ्यादिसमाप्तिः । पुनः परिसमूहनादि ६ । स्तराः ४ । प्रतिपदः मरणदिनादारभ्यामावसीमभिव्याप्य चत्वारि २ धारणाणि । (अ० प्र० सू० प्र० इति षष्ठ्याहुतीर्जुहुयात्) पुनः परिसमूहनादि ६ । शवस्नानादि ॥ [३०] यदि चंशे चंप्र । अंशे अंप्र । प्रप्र । शुक्लपक्षप्रतिपदि पक्षयागकर्ता पक्षयागकरणं विना मृतः । तस्य- पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । उत्तरतः सं० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्व० एवं प्रोक्षामि । आज्यभागान्ते । भुवो० । उभावां० । ये के च ज्मा० । ऋतुतिथ्यादिसमाप्तिः । विमुच्य । (शुक्लप्रतिपदि मृतत्वान्न धारणानि) पुनः परिसमूहनादि ६ । शवस्नानादि—

[३१] कृत्वाऽकृत्वा सिनीवाल्यां यागं यदि मृतो द्विजः । पर्वतंत्रं पुनः कुर्याद्दद्यात् षष्ठ्याहुतीः क्रमात् । यदि अंदि १२ तस्या एवामावस्या अन्तरे पर्वतंत्रं कृत्वा अकृत्वा वा मृतः, तस्य पुनरपि कृष्णपक्षयागं कुर्यात्—

(शुक्लगतेरानेतव्यत्वात्) तद्यथा– पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० सू० प्र० स्वाहा । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० अग्नये इन्द्राग्निभ्यां जुष्टं निर्व० एवं प्रोक्षामि । आज्यभागान्ते । भुवो० उभा० ये के च० । ऋतुतिथ्यादिसमाप्तिः । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । मृतिदिनादारभ्य षष्ठ्याहुतयः । यथा अमावस्यां अ० प्र० सू० प्र० । एवं प्रतिपदादिषु । अन्ते चतुर्दश्यां अ० प्र० सू० प्र० । (नतु पूर्णपंचदश्यां) ॥ विमुच्य पुनः परिसमूहनादि ६ । शवस्नानादि–॥

[३२] यश्च पक्षयागकर्ता (अंदि १) पक्षयागकरणं विना शुक्लप्रतिपन्मध्ये मृतः, तस्य पक्षयागः कार्यः । यथा– पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । सू० प्र० । विमुच्य । पुनः परिसमूहनादि ६ । आदौ पंच० । अग्नये इन्द्राग्निभ्यां जुष्टं निर्व० एवं प्रोक्षा० आज्यभागान्ते– भुवो० उभा० ये के च ज्मा० । ऋतुतिथ्यादि । अत्र धारणानि न दद्यात् ॥ विमुच्य पुनः परिसमूहनादि ६ । शवस्नानादि ॥ (प्रतिपदि मृतत्वात् शुक्लगतिः स्वयं सिद्धा । केवलममावसीपर्वतंत्रमेव कर्तव्यम्) ॥

[३३] अंशे अंप्र अमावसीमध्ये पक्षयागस्याकर्ता मृतः । तस्य उद्वाहः साध्यः ॥ पात्रं तिला० परिसमूहनादि ६ । आदौ पंच० । सर्वमुद्वाहतंत्रं सम्पाद्य । विमुच्य । पुनः परिसमूहनादि ६ । स्तराः ४ । अ० प्र० सू० प्र० । विमुच्य ।

ततः कृष्णपक्षयागः, यथा–परिसमूहनादि ६। आदौ पंच०। अग्नये इन्द्राग्निभ्यां जुष्टं निर्वपामि। एवं प्रोक्षामि। आज्यभागान्ते भुवो यज्ञस्य० उभावां० ये के च० । ऋतुतिथ्यादिसमाप्तिः। विमुच्य। पुनः परिसमूहनादि ६ । स्तराः ४। अमावस्यां अ० प्र० सु० प्र० एवं शुक्लप्रतिपदादिषु। अन्ते चतुर्दश्यां अ० प्र० सु० प्र०। पूर्णपंचदश्यां तु नैव धारणानि देयानि ॥ पुनः परिसमूहनादि ६। शवस्नानं ॥

[३४] अमावसीतिथिघटिका उल्लंघ्य, पर्वतन्त्रं कृत्वा प्रतिपन्मध्ये मृतः, तस्य पुनः पर्वतंत्रं न कुर्यात् । तद्यथा– पात्रं तिला० । परिसमूहनादि ६ । स्तराः ४ । इदं हविः० । सु० प्र० स्वाहा। विमुच्य। पुनः परिसमुह्य पर्युक्ष्य । अग्नौ पुष्पं । शवस्नानादि ॥

[३५] एवमेव पूर्णिमातिथ्यन्तमभिव्याप्य पर्वतंत्रं न कुर्यात्। यदि तु कृष्णप्रतिपत्प्रवेशे कश्चिन्म्रियेत तदा कृष्णपक्षयागः॥

—:o:*:o:—

## मले मासिकपिण्डादिनिर्णयः ।

मलमासे सति प्रेताय दातव्यमासिकपिण्डादिनिर्णयः ॥ मुहूर्तमार्तण्डे– "वर्षमध्ये चेत्सर्वदाधिकम् । तत्र स्यान्मासिकं, मृत्युमासात्स द्वादशो यदि । प्रेतक्रिया समाप्यात्र इत्यादि" ॥ [मरणे के वर्ष में यदि अधिमास आवे, तो उस अधिमास (मलमास) में भी मासिक करना निषिद्ध नहीं । और मृत्युमाससे वह मलमास यदि बारवां हो

(अर्थात् वार्षिकसपिण्डीकरण के दिन मलमास हो) तो मलमास में ही वार्षिकसपिण्डीकरण का करना उचित है ॥ (इति अन्ते मले सति द्वादश मासाः)] ननु "मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकमिति" शुद्धमासमृतानां मलमासे मृताहश्राद्धकर्तव्यताभिधानमयुक्तम् । नैष दोषः । तस्याभिधानस्य प्रथमाब्दिकविषयत्वात् ॥ "आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे" इति स्मरणात् ॥ तथा हारीतोपि- "प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्" इति ॥ [प्रश्न- (उपोद्घात यह है कि प्रतिसांवत्सरिकश्राद्ध, मलमास त्यागकर शुद्धमासमें ही करना चाहिए) तो यह कैसे कहा है, कि शुद्धमासमें भी मरे हुए को मलमासमें श्राद्धकरना चाहिए। उत्तर। यह दोष नहीं । क्योंकि यह उसके लिये कहा है, जिसको पहिला वार्षिकसपिण्डीकरण मलमासमें आवे (प्रत्याब्दिकके लिये नहीं) हारीतने भी कहा है, कि प्रत्याब्दिक सदा द्वादशमासके अनन्तरही करना चाहिए । परन्तु कदाचित् (जब मलमास प्रत्याब्दिक पर हो) तो त्रयोदशमासके अन्त पर प्रत्याब्दिक करना चाहिए ॥ परन्तु पहिला वार्षिकसपिण्डीकरणश्राद्ध मलमासमें भी करना उचित है (इति अन्ते मले सति द्वादशैव मासाः)] कालमाधवीये मासनिर्णयः-अत्रापि पूर्ववदेव सर्वं वर्णितमस्ति । "मलमासमृतानां तु श्राद्धं यत्प्र-

तिवत्सरम् । मलमासे तु कर्तव्यं नान्येषां तु कदाचनेति" अतः शुद्धमासमृतानां मलमासे मृताहश्राद्ध (द्वितीयाद्याब्दिक) कर्तव्यताविधानमयुक्तम् । तत्तु विधानं प्रथमाब्दिकविषयम् । 'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे, इति स्मरणात् । तथा हारीतोऽपि– 'प्रत्यब्दं द्वादशे मासि,– इति पूर्वमुक्तम् । अतो द्वादशे मासि पूर्णे सति अनन्तरदिने पिण्डक्रिया कार्येति व्याख्येयम् । तस्मात् शुद्धमासप्रमीतानां प्रथमाब्दिकं मलमासे कर्तव्यम् । द्वितीयाद्याब्दिकं तु शुद्धमासे इति ॥ (पुनः पुनरेतदेव कथितमस्ति) [कालमाधवके मासनिर्णयमें पूर्वोक्तरीतिसे ही सारा वर्णन किया है । मलमासमें मरे हुए को ही प्रतिवार्षिकश्राद्ध 'मलमास यदि उस दिन हो, मलमासमें ही करना चाहिये । औरोंको शुद्धमासमें । इसलिए शुद्धमासमें मरेहुए को द्वितीयाद्याब्दिक 'अर्थात् दूसरे वर्षसे लेकर जो वार्षिक आवे, मलमासमें करनेको उचित नहीं । प्रथमाब्दिक तो मलमासमें ही कर्तव्य है । क्योंकि स्मृतियोंमें कहा है कि– प्रथमाब्दिक अवश्य मलमासमें करनेको योग्य है ॥ हारीतने भी ऐसा ही कहा है (जो पहिले ही लिखा हैं) ॥ कि– प्रतिसांवत्सरिक त्रयोदशमासके पहिले दिन करना चाहिए । मलमासके होने पर तो चतुर्दशमासके पहिले दिन करना उचित है । परन्तु प्रथमसांवत्सरिक मलमासमें ही करना चाहिये । अतः शुद्धमासमें मरे हुए का

प्रथमाब्दिक मलमासमें ही करनेको योग्य है । द्वितीयाद्याब्दिक जितने आवें शुद्धमासमें ही (मलमास छोडकर) करने चाहिए] (इति अन्ते मलमासे सति द्वादशैव मासाः कर्तव्याः) संप्रदायप्रदीपिकातः- यस्तु संवत्सरे द्वात्रिंशे असंक्रान्तिकस्य मलत्वमङ्गीकुर्वाणः आवद्यमावस्यामारभ्य भावदि दर्शान्तं तावन्मृतः, अथवास्मिन्वर्षे षडगनन्दागतस्य मलत्वमङ्गीकुर्वन् आवदि दशमीमारभ्य भावदि दशमीं तावन्मृतः । तस्य संवत्सरे त्रयस्त्रिंशे ऽद्य मलमाससत्तायां द्वादशमासगणनया मलमास एव प्राप्तेरत्रैव प्रथमाब्दिकं श्राद्धं कर्तव्यम् । वसिष्ठः- असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं, पूर्वं सपिण्डीकरणं तथा ॥ हारीतः- अधिमासे न कर्तव्यं श्राद्धमभ्युदयं तथा । तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥ सर्वदा द्वादशे मासि कार्या पिण्डक्रिया बुधैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥ यमः- आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । त्रयोदशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकम् ॥ तथाच- प्रथमाब्दिकं यत् तद् द्वादशगणनया प्राप्तं मलिम्लुच एव कार्यम् । द्वितीयाब्दिकं तु त्रयोदशे तु संप्राप्ते त्ययाद्यानुसारेण कर्तव्यम् ॥ तथा पारिजातेऽप्येवमेव-द्वितीयाब्दिकं तु शुद्ध एव कार्यम् । तस्मिंस्तु प्रकृते मासि कुर्याच्छ्राद्धं यथाविधि इति सत्यस्मरणात् ॥ क्वचित्त्रयोदशेऽपि स्यादित्यनेनापि एतदेव व्यञ्जितम् । [इसका आशय

यह है, कि मरेहुए के द्वादशमासमें यदि मलमासान्तर्गत प्रथमवार्षिक आवे, तो वह मलमासमें ही करना चाहिए। वसिष्ठ कहते हैं- कि मालमासमें भी प्रथमवार्षिक करना चाहिये। तथा मासिक, द्वादशदिनका सपिण्डीकरणभी मलमें करनाचाहिये। हारीत कहते हैं- कि अधिमासमें श्राद्ध, आभ्युदयिककर्म, तथा कोई काम्यकर्म न करनाचाहिए। परंतु प्रथमवार्षिक निषिद्ध नहीं। सर्वदा० इति इसका अर्थ पहिलेही लिखा है॥ पहिला वार्षिक मलिम्लुचमें भी करना चाहिए। परंतु तब दूसरावार्षिक त्रयोदशमासके अन्त पर करना चाहिए॥ यह यमवाक्य है॥ तथाचेत्यादि का भी यही सारांश है॥ तथा पारिजातमें भी ऐसाही लिखा है। कि- दूसरा वार्षिक (शुद्ध) मास पक्ष तिथि आदि युक्त दिनमें (त्रयोदशमासान्तपर) करना चाहिये। सत्यकी स्मृति यह है-कि द्वितीयवार्षिक यथाविधि प्रकृतमास में करनाचाहिए। 'क्वचित्त्रयोदशेपिस्यात्-', इसका भी यही गरज़ है॥ (अतोऽन्ते मलेसतिद्वादशैव मासाः)] मदनपारिजाते-यदा प्रथमसंवत्सरे दैवादधिमासस्त्रयोदशस्तदा प्रथमाब्दिकमधिमास एव। अब्दे परिपूर्णे सपिण्डनपक्षाश्रयणे सपिण्डीकरणमपि तत्रैव॥ तदाह वसिष्ठः-असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः। तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा॥ यत्तु सत्यव्रतेनोक्तम्-वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृताहनि। मलमासे न कर्तव्यं

व्याघ्रस्य वचनं यथेति-एतदधिमासादन्यत्र मृतस्य सांवत्सरिकश्राद्धविषयम्-प्रथमाब्दिकव्यतिरिक्तविषयं च ॥ [मदनपारिजातमें कहा है-कि मरेहुए को पहिले वर्षमें दैवसे जब त्रयोदशमासके आरम्भ पर मलमास हो, तो प्रथमवार्षिक-सपिण्डीकरण मलमासमें ही करना चाहिए। इस पर वसिष्ठका वचन जो यहां है । उसका अर्थ पहिलेही आया है। सारांश यहहै कि मलमासमें ही पहिला वार्षिक-सपिण्डीकरण करना चाहिए । सत्यव्रतने जो यह कहा है-कि मातापिताके मरनेकी तिथि पर यदि मलमास हो तो उनका श्राद्ध न करना चाहिए (अर्थात् शुद्धमासमें करना आवश्यक है) क्योंकि व्याघ्रका वचनभी ऐसाही है ॥ यह सत्य है। परंतु अधिमासको छोडकर मरे हुए के सांवत्सरिकश्राद्धके निषेध पर यह वाक्य है ॥ यह निषेधवाक्य प्रथमसांवत्सरिकके विषयपर नहीं (मलमास यद्यपि हो तथापि प्रथमवार्षिक उसीपर करना सर्वसम्मत है)॥ अतोऽन्ते मले सति द्वादशैव मासाः-इति स्पष्टम् ॥] — (अथादौ-मरणकाले मलमासे सति द्वादशैव मासा इति लिख्यते । आदिपदस्य मरणमेवार्थः इतिच अधोरेखाङ्कितैः पदैः स्वयमेव विचार्यम् ॥ आद्यन्तयोर्मले मासे मासान्द्वादश कारयेदित्यत्रापि-आदिपदस्यायमेवाशयः ) ॥ ( सम्प्रदायप्रदीपिकायां ) तत्र मलमासमध्ये यो मृतः तस्य यथाक्रमं श्राद्धषोडशकं प्रेतत्वमोचकं सम्पाद्य यस्मिन्कस्मिंश्चित्क्रमप्राप्ते

द्वादशे मासे प्रथमाब्दिकं विधेयम् (अतो मलमासे मृतस्य द्वादशैव मासाः) ॥ तथाचापरार्के हारीतः-सर्वदा द्वादशे मासि कार्या पिण्डक्रिया बुधैः। क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वातु वत्सरम्-अस्यार्थः-सर्वदा द्वादशे मासे परिसमाप्ते त्रयोदशारम्भे प्राप्ते पिण्डक्रिया। (श्राद्धदिने) अधिमासोपनिपाते तु त्रयोदशेऽतीते चतुर्दशारम्भे प्राप्ते पिण्डक्रिया। आद्ये तु वत्सरे (मृत्युदिने) अधिमासे सति द्वादशे व्यतीते त्रयोदशे एव कार्यम् न चतुर्दशे इति ॥ एतच्च यस्य मासस्य- (मरणमासस्य मरणदिने इत्यर्थः) द्वित्वं लगति तद्विषयम् ॥ अन्यथा- (मरणकालात्पश्चात्, वार्षिकसपिण्डीकरणात् द्वादशमासादित्यर्थः पूर्वमपि, मलमासे सति अर्थात् मलमासस्य मध्यपातेऽपि द्वादशे व्यतीते त्रयोदशादौ प्रथमवार्षिकं विधेयमित्यर्थकरणे) त्रयोदशे मासिके दत्तो जलाञ्जलिः स्यादिति ॥ अत्रायं चतुर्थे श्लोकपादे वाक्यार्थः- द्विराषाढशुदि प्रतिपदमारभ्याधिमासे यो मृतः तस्य न वृद्धिः। तत्पूर्वकालमृतस्य तु वृद्धिरस्त्येवेति। तथाहि- यदि संवत्सराभ्यन्तरेऽधिमासः स्यात्तदा मासिकार्थं दिनमेकं वर्धयेदिति विष्णुवचनेऽप्ययमेवाभिप्रायः। मासिकार्थमित्यत्र यावद्वचनं वाचनिकमिति न्यायेन मासिकानि दशैकं चेति संख्यातानि एकादश मासिकानि। नच मलमास मृतस्य तेष्वेकमपि मासिकं मलमासे सम्भवति इति कुतोऽत्र वृद्धिः। कुतश्च तदनुगामित्रयोदशमासगणनया सम-

दशत्वं प्रेतपिण्डेषु-इति । तत्सिद्धं मलमासमृतस्य द्वादशैव मासा इति ॥ — [मलमासमें जो मरा हो उसको क्रमसे प्रेतत्वसे छुडानेवाले षोडशश्राद्ध करके क्रमप्राप्त जिस किसी द्वादशमासके अन्त पर प्रथमवार्षिक करना चाहिए (इसलिए यह स्पष्ट है-कि मलमासमें मरेहुए को बारहमासका वर्ष होता है)॥ अपरार्कमें हारीतने कहा है- सर्वदा द्वादशमासोंके समाप्त होने पर त्रयोदशमासके पहिले दिन प्रत्याब्दिक श्राद्ध करना चाहिए ॥ (श्राद्धके दिन) यदि मलमास हो तो चतुर्दशमासके पहिले दिन श्राद्ध करना चाहिए (अर्थात् शुद्धमासमें)। परंतु मरनेके काल यदि मलमास हो, तो पहिले वर्षमें त्रयोदशमासके प्रथम दिनही आद्याब्दिक श्राद्ध करना चाहिए । (अर्थात् मलमें मरेहुए को बारह मास का ही वर्ष है) ॥ (फिर यही आशय स्पष्टतासे कहा है । कि- यह तब जानना चाहिए । जब मरणमासका द्वित्व अर्थात् मलमास हो (मरणेके समय मल हो) ॥ अन्यथा-मलमासके मध्यपातमें भी यदि बारह मासका ही वर्ष माना जाये, तो तेरवें मासके- पीछे श्राद्धका कोई विषय नहीं है । आशय यह कि मलमासके मध्यपतित होने पर (अर्थात् मरणकालके पीछे और वार्षिकसपिण्डीकरणदिनसे पहिले यदि मलमास हो) तेरवें मासके अनन्तर चतुर्दशमास के आदिदिन वार्षिकसपिण्डीकरण करना चाहिये ॥ यहां इस उपर्यु-

क्त श्लोकके चतुर्थपाद का वाक्यार्थ यह है-कि द्विराषाढशुदि प्रतिपदाके आरम्भसे मलमासमें जो मरा हो। उसको मासिककी वृद्धि नहीं है ॥ (उसको आदिमें मलमास होनेसे द्वादशमासका ही वर्ष होताहै)। उस प्रतिपदासे पूर्वकालमें जो मरा हो,उसको तो मासिककी वृद्धि होती है (मलके मध्यपातसे उसको तेरह मासका वर्ष है) ॥ यदि मृतवर्षके अभ्यन्तर (अर्थात् मरणकालसे पीछे और वार्षिकसे पहिले) यदि मलमास हो, तब मासिकके लिये एक दिन बढाना चाहिए ॥ ऐसे विष्णु-वचनका भी यही अभिप्राय है ॥ क्योंकि- षोडश श्राद्धोंमें से आद्यौर्ध्वदैहिक त्रैपाक्षिक पंचपाक्षिक ऊनषाण्मासिक ऊनसांवत्सरिक छोड कर शेष ग्यारहही मासिक हैं (यह पांच तो पूरे मासके न होनेसे मासिक नहीं कहलाते हैं) ॥ क्योंकि मासिकार्थ इस पदके वचनसे मासिकही ग्रहण करनेके योग्य हैं ॥ मलमें जो माराहो, उसको मलमासमें किसी मासिक के आनेका सम्भव नहीं है। इसलिये मलमासमें मरेहुए को कैसे मासिककी वृद्धि होसकती है। मासिककी वृद्धि न होनेसे सतारह प्रेतपिण्डभी कैसे बनसकते हैं। इसलिये यह सिद्ध हुआ-कि मलमासमें मरेहुए को बारह मासका ही वर्ष है] ॥ मलमासमृतस्य द्वादशमाससमाप्तिगणनया प्रथमाब्दिकमिति हि क्रम आद्यवत्सरे एव। नतु प्रतिवत्सरं द्वितीयादिष्वाब्दिकेषु। द्वितीयाब्दिकस्य तु

त्रयोदशे संप्राप्ते (तदन्ते) कर्तव्यता। अत एवानन्तभट्टेन-आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे। त्रयोदशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकम्-इति वाक्ये 'न कुर्वीत, इति नकारेण पाठे परावृत्त्याऽस्मिन्विषये योजितम् ॥ तथाह्यस्यार्थो व्याख्यातः-मलिम्लुचे मृतस्य प्रथमाब्दिकं यत् तत्त्रयोदशे सम्प्राप्ते न कुर्वीत। किंतु द्वादशे एव। तु पक्षान्तरे मलमासमृतस्य पुनराब्दिकं-द्वितीयाब्दिकं यत् तत्त्रयोदशे सम्प्राप्ते कुर्वीत। न द्वादशे इत्यर्थः ॥ [मलमासमें मरे हुए का प्रथमवार्षिक द्वादशमासोंकी समाप्ति पर करनाचाहिए, यह क्रम तो प्रथमवर्षमें ही है। प्रतिवर्ष वार्षिकों पर (दूसरे तीसरे आदि वार्षिकों पर) यह क्रम तो नहीं है। बल्कि दूसरा वार्षिक त्रयोदशमासके अन्त पर कर्तव्य है॥ इसीलिए अनन्तभट्टने आब्दिकं० इति श्लोकमें 'न, शब्द और मिलाकर इस विषयपर इसप्रकार अर्थकी योजना किई है- कि-मलमासमें मरेहुए को प्रथमवार्षिक त्रयोदशमासके अनन्तर न करना चाहिए। किंतु द्वादशमासके अनन्तर ही करना चाहिए। परंतु मलमासमें मरेहुए का दूसरा वार्षिक त्रयोदशमासके अनन्तर करना चाहिए। द्वादशमासके अनन्तर नहीं॥ (इससे भी यह सिद्ध हुआ कि- मलमासमें मरेहुए का वर्ष द्वादशमासका ही है)॥]

यश्चास्मिन्नेव त्रयस्त्रिंशे वर्षे (संवत् ३३) द्विआषाढवदि वृअदि १६ नदि १६ अधिमासप्रवेशोगि २० अत्रैकस्यामेव

दशम्यां तिथौ मलमासप्रवेशात्पूर्वं सप्तदशीं दिनघटीमारभ्य परस्मिन् घटिकात्रये यो मृतस्तस्य यथाक्रमप्राप्तायां पूर्णिमान्तमासपरत्वेन श्रावणकृष्णदशम्यां प्रत्यब्दं त्वयाहः (मलस्य मध्यपाते १३ मासाः) ॥ यस्त्वस्यामेव दशम्यां तिथौ प्रविष्टे मलमासे विंशतितमघटिकोत्तरकालं परस्मिन् चषकेऽपि मृतस्तस्य "मलमासमृतानां तु सौरं मासं समाश्रयेत्" इति वचनेनात्र मिथुनसंक्रान्तिसत्तया प्रत्यब्दं त्वयाहः (मले मृतस्य १२ मासाः) ॥ आषाढकृष्णदशम्यामित्येकस्मिन्नेव मासे तिथिकृतः पौर्वापर्यविपर्ययः-इत्युपहसितं षडगनन्दागतमलमासखण्डनकृता शुभाकरराहुलेन । तद्भूषणमेव नतु दूषणम् ॥ तथाहि-अस्य मलिम्लुचमासस्य चौरवत् अत एव मलिम्लुचत्वं सार्थकमिति (दिग्दर्शनार्थमत्रानीतम्) ॥ (सारांशस्तु-मलप्रवेशात् कतिपयचषकानन्तरमपि मृतस्य द्वादशमासो वर्षः मलेमृतत्वात् । मलप्रवेशात्कतिपयचषकेभ्योपि पूर्वं मृतस्य त्रयोदशमासो वर्षः ॥ मलस्य मध्यपतितत्वात् ॥ इति पूर्वपक्षिणोऽपि मतमेतत् ग्रन्थकर्तुरभिमतमेवात्र) [इसका सारांश यह है-कि मलमासका प्रवेश जब होचुका हो तो कुच्छ चषकोंके भी पीछे जो मराहो, उसके लिए बारह मासका वर्ष है (क्योंकि मलमासमें मरा है) ॥ जब तो मलमासका प्रवेश न हुआ हो, जो कोई उस मलप्रवेशसे कुच्छ चषकभी पहिले मरे, उसकेलिए त्रयोदशमासका वर्ष है (क्योंकि मलमास मध्यपतित है) ॥

इसलिए यह सिद्ध हुआ कि-"आद्यन्तयोर्मले मासे मासान्द्वादश कारयेत्„ इस वाक्यके आदिपदका अर्थ मृतवर्षका आदि (अर्थात् मरणेका समय) सिद्धान्तित है। अन्तपदका अर्थ मृतवर्षका अन्त (अर्थात् ऊनसांवत्सरिक) नियत है। जब मरणकाल और ऊनसांवत्सरिक मलमासमें हों, तो द्वादशमासका ही वर्ष है ॥ इति ॥ ]

[ अब यह लिखा जाता है कि कब त्रयोदशमासका वर्ष होता है, कब मासिककी वृद्धि होती है। किस किस मासिककी वृद्धि होसकती है। और वह मासिक वृद्धि कब (किस मासमें) करनी चाहिए ॥ ] द्विराषाढशुदि प्रतिपदमारभ्याधिमासे यो मृतस्तस्य न वृद्धिः। तत्पूर्वकालमृतस्य तु वृद्धिरस्त्येव। तथाहि-यदि संवत्सराभ्यन्तरेऽधिमासः स्यात्तदा मासिकार्थं दिनमेकं वर्धयेदिति विष्णुः॥ [ द्वितीय आषाढशुक्ल प्रतिपदाके आरम्भसे जो मलमासमें मरा हो, उसको किसी मासिककी वृद्धि नहीं होगी (मलमें मरणे से १२ मास ही हैं) ॥ उससे पूर्वकालमें जो मरा हो, उसको तो मासिककी वृद्धि अवश्य करनी है (क्योंकि उसे मलमास मध्यपतित है)। क्योंकि विष्णु कहते हैं-कि यदि संवत्सरके मध्य मलमास आवे, तो मासिकके लिये एकदिन बढाना चाहिए ॥ ] अपिच-यस्तु संवत्सरे द्वात्रिंशे भावदि दर्शमारभ्य त्रयस्त्रिंशद्द्विराषाढवदि दर्शं तावन्मृतः। अथवा ऽत्रैव द्विराषाढवदि दशमीं तावत्

षडगनन्द्रागतस्य मलत्वमङ्गीकुर्वाणो मृतः । तस्य यस्य कस्य चिन्मासिकस्य प्रथममासिकादूर्ध्वमेकादशमासिकान्तस्य मले प्राप्त्या वृद्धिवशात्त्रयोदशे मासि सांवत्सरिकं कार्यम् ॥ तथाहि–संवत् ३२ भाद्रशुक्लमृतस्य पुनः संवत् ३३ भाद्रशुक्ले श्राद्धकर्तव्यतया त्रयोदशमासत्वं स्पष्टमेव ॥ एवमत्रान्यमासेष्वपि यथायथं योज्यम् ॥ तथा च विष्णुः– "यदि संवत्सराभ्यन्तरे ऽधिमासः स्यात्तदा मासिकार्थे दिनमेकं वर्धयेत्," अत्राभ्यन्तरपदोपादानादवधिभूतयोराद्यस्यौर्ध्वदैहिकनाम्न ऊनसांवत्सरिकनाम्नश्चान्त्यस्य श्राद्धपिण्डस्य निवृत्तिः । तथाहि–चैत्रमैत्रयोर्मध्याद्यज्ञदत्तमानयेत्युक्ते कश्चिच्चैत्रमैत्रौ नानयति । किंतु तन्मध्यवर्तिनं यज्ञदत्तमेव । तथात्रापि मध्यवर्तिन एव वृद्धिः । नत्वाद्यन्तयोः । मासिकपदेन पाक्षिकयोर्निवृत्तिः । एकमिति संख्यानियमादूनस्य निवृत्तिः ॥ तस्मात्प्राप्ते द्वितीयमासिके तृतीयमासिके षाण्मासिके वा मलिम्लुचे न द्वयोः पिण्डयोर्वृद्धिः । किन्त्वेकस्यैव । अतो वृद्ध्यापि सप्तदशत्वमेव प्रेतपिण्डेषु श्राद्धेषु । न सदाचारविरुद्धमष्टादशत्वमपि ॥ [अब यहां यह कहाजाता है–कि कब त्रयोदशमासका वर्ष होजाता है । और किस पिण्डकी वृद्धि करनी चाहिए–जैसा कि– कोई संवत् ३२ भाद्रकृष्ण अमावसीसे लेकर संवत् ३३ की द्वितीयाषाढकृष्ण अमावसीतक मरा, उसको प्रथम मासिकसे एकादश मासिक तक कोईमासिक मलमासमें रहेगा। इसलिए एक मासिकपिण्डकी

वृद्धिसे तेरहवें मासके अन्तपर सांवत्सरिक करना चाहिए॥ उदाहरण यह है-कि संवत् ३२ भाद्रशुक्लमें मरेहुएको दूसरे संवत् ३३ भाद्रशुक्लमें सांवत्सरिकश्राद्ध कर्तव्य है। अतः स्पष्टतासे तेरह मासका वर्ष रहा॥ दूसरेप्रकारके मलमासमें और और मासोंमें भी इसीप्रकार विचारना॥ "यदि संवत्सरके भीतर (मध्य) मलमास हो, तो मासिकके लिए एक दिनकी वृद्धि किईजावे,, यह विष्णुका वचन है। यहां अभ्यन्तरपदके होनेसे दो तरफकी अवधिकी अपेक्षा है उपरकी अवधि आद्यौर्ध्वदैहिक है, अन्तिम अवधि ऊनसांवत्सरिक है। इन दोनों पिण्डोंकी वृद्धि नहीं होसकती है। (आशय यह है कि मरनेके पीछे यद्यपि आद्यौर्ध्वदैहिक पर मलमास हो, तो तेरहमासका वर्ष तो बनजाता है। परंतु आद्यौर्ध्वदैदिकके पिण्डकी वृद्धि नहीं होसकती है, वहां प्रथममासिक पिण्डकी वृद्धि समझनी चाहिए। मरनेके समय और ऊनसांवत्सरिकपर मलमास हो तो द्वादशमासका ही वर्ष रहताहै अतः ऊनसांवत्सरिकपिण्डकी वृद्धि नहीं है॥) उदाहरण यह है-जैसे चैत्र, मैत्र, के मध्यवर्ती यज्ञदत्तको लाओ, ऐसा जब कहाजावे तो चैत्रको तथा मैत्रको भी नहीं लाया जाता है। बल्कि तन्मध्यवर्ती यज्ञदत्त ही लायाजाता है। वैसेही यहां भी मध्यवर्ती मासिक की ही वृद्धि होती है॥ आद्य और अन्तिम पिण्ड की वृद्धि नही होती॥ मासिकपदके होनेसे (विष्णुवचनमें) पाक्षिकपिण्डोंकी नि-

वृत्ति है। एकं इति, पदसे संख्याका नियम है। अतः ऊनषाण्मासिककी निवृत्ति है अर्थात् उनपिण्डोंकी वृद्धि नहीं। इसलिए यह सिद्ध हुआ। कि- मलमासमें यद्यपि द्वितीयमासिकके साथ त्रैपाक्षिकभी आवे। तृतीयमासिकके साथ पांचपाक्षिक भी आवे, ऊनमासिक का भी षाण्मासिकके साथ मल हो, तो भी दोपिण्डों की वृद्धि नहीं करनी चाहिए, किंतु एकही की ॥ इसलिए वृद्धि होने पर भी १७ पिण्डही देने होते हैं। १८ पिण्ड नहीं। क्योंकि उसमें सदाचारका विरोध होता है ॥ अब पिण्डवृद्धि कब करनी चाहिए-यह लिखा जाता है] "संवत्सरस्य मध्ये चेदधिमासकः ततो द्वादशे मासि कार्यं तदधिमासकम्,,॥ [इसका अर्थसार व्याख्यानुरूप यह है। कि- संवत्सरके मध्यमें यदि मलमास आवे तो वृद्धिका पिण्ड त्रयोदशमास होने पर भी द्वादशमासकी कल्पना करके उसके अन्त पर आकृष्ट करके 'ऊनसांवत्सरिके सप्तदशे, ऐसा कह कर सतारहवां पिण्ड देना चाहिए। मध्यमें मल होनेपर भी संख्या और क्रम न त्यागना चाहिए। एकको ही द्वितीयावृत्ति नहीं करनी चाहिए ॥ कहा भी ऐसाही- "तदेवं संख्यानतिक्रमेण श्राद्धेषु यथाक्रमं क्रियमाणेषु अधिकस्य सप्तदशस्यान्त्य एव कर्तव्यता प्रस्फुटं स्फुरति ॥,, ]

मलमासकार्यनिर्णयः।

अथान्यदपि किंचित्प्रकृतानुसारि लिख्यते- "मलमासमृतानां

तु श्राद्धं यत्प्रतिवत्सरम् । मलमासेऽपि कर्तव्यं व्याघ्रस्य वचनं यथा ॥ अपिशब्दः एवकारार्थे ॥ मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरम् । मलमासे तु तत्कार्यं नान्येषां तु कदाचन ॥ वर्षे वर्षे तु यत् श्राद्धं मृताहे, तन्मलिम्लुचे । कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु,, ॥ इत्यादिवचनबलान्मलमासमृतस्य पुनर्मलमासप्राप्तौ मलमास एव श्राद्धं नोत्तरत्रेति सिद्धम् ॥ [मलमासमें मरे हुए का श्राद्धादि जबकभी श्राद्धदिन पर मलमास आवे, उसी मासमें करना-चाहिए । इसके लिये शुद्धमासकी प्रतीक्षा नहीं है ॥ शुद्धमासमें मरेहुएको तो मलमासमें ब्राह्मण-भोजन कराके शुद्धमासकी प्रतीक्षा करके शुद्धमें ही श्राद्धादि करना ॥ ] "आब्दिकाहनि सम्प्राप्ते मलमासो भवेद्यदि । श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति,,॥ तथा- "वर्षे वर्षे तु यत् श्राद्धं मातापित्रोर्मृताहनि । मासद्वयेऽपि तत्कार्यं व्याघ्रस्य वचनं यथा,, [इत्यादि जो कुच्छ दोनो मासोंमें व्याघ्रआदिने श्राद्धकी कर्तव्यता बतलाई है, वह तो क्षयमासके लिए है ] ॥ क्षयमासलक्षणं तु,- "राशिद्वयं यत्र मासे संक्रमेत दिवाकरः । क्षयमासः स विज्ञेयः सर्वकर्मसु गर्हितः,, ॥ तथा- "असंक्रान्तिमासोऽधिमासः स्फुटः स्यात् द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यदा स्यात्तदा वर्षमध्येऽधिमासद्वयं स्यात्,, [यह कदाचित् ही चिरकालके पीछे आता है । अथवा उपर जैसा कि लिखाहै, कि मलश्राद्धमें ब्राह्मणभोजन श्राद्धदिनके

साफल्यके वास्ते करना चाहिए इति- बहवः ॥ अथवा काश्मीरके विद्वानोंका यह आचार इस विषय पर प्रशंसनीय है-कि वह मार्तण्डक्षेत्रमें जाकर मलिम्लुचकी श्राद्धतिथि पर अथवा रविवार पर श्राद्ध करते हैं। फिर शुद्धमासमें भी यथाविधि श्राद्ध करते हैं] तथाचापरार्के- "क्रियते पतितानां तु गते संवत्सरे क्वचित् । दशधर्मप्रधानत्वाद्दयाकूपे स्वबन्धुभिः ॥ मार्तण्डपादमूले वा श्राद्धं हरिहरौ स्मरन् ,,॥ स्कन्दपुराणे- "अदग्धानामपिण्डानां पतितव्रतिनां तथा । श्राद्धं पिण्डप्रदानं च नैव कुर्यादिति श्रुतिः- तेषां मलिम्लुचे मासि सूर्यक्षेत्रे प्रयत्नतः। सितासिताभ्यां पक्षाभ्यां या तिथिः श्राद्धकर्मणि । तस्मिंस्तस्मिन्रविक्षेत्रे मासे चैव त्रयोदशे । श्राद्धं पिण्डप्रदानं च कुर्यान्मार्तण्डपादयोरिति,, ॥

[और- यद्यपि मलमासमें मरेहुए के प्रतिवार्षिक पर सौरमानका आश्रयण करना लिखा है, तथापि "चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः । अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम् ॥ मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि-,, ॥ इत्यादिवचनबलात् क्षयाहे सा सा संक्रान्तिरस्तु वा मास्तु तत्तन्मासएव सांवत्सरिकं श्राद्धं मासचिह्नितं विधेयमिति ॥ "महालये कन्यां गच्छतु वा नवे,,त्यादिवदन्यत्रापि रविसंक्रमस्य तुल्यन्यायत्वात्,, — अर्थात् सूर्यकी गति कालवश चक्रके समान होती है । इसलिए वार्षिकश्राद्ध मासके ही चिह्नसे करना चाहिए । इस वचनके बलसे श्राद्धके दिन

वह वह संक्रान्ति हो अथवा नहो, पौष-माघादिमासके ही चिह्नसे उस उस मासमें ही वार्षिक श्राद्ध करना चाहिए ॥ जैसे महालय (पितृपक्ष) में कन्याराशिगत सूरज हो अथवा नहो श्राद्धादि करतेही हैं, ऐसी ही बात इस वार्षिकश्राद्ध-में भी समझनी चाहिए । सूरजका संक्रमन्याय प्रतिविषय समान है ॥ ] "रघुनन्दनप्रणीते संस्कारतत्त्वेऽपि संगृह्य पिण्डनिर्णयादिरित्थमेव वर्णितोऽस्ति-पुनः तत्सङ्ग्रहणं त्वत्र पिष्टपेषणमिव भाति,, ॥ मलमासे वर्ज्यावर्ज्यनिर्णयः-

"अनन्यगतिकं नित्यं नैमित्तिकं काम्यं चाधिमासक्षयमास-योः कार्यम् ॥ सगतिकं नित्यं नैमित्तिकं काम्यं च वर्ज्यम् ॥ तथाहि- सन्ध्याग्निहोत्रादि नित्यं, ग्रहणस्नानादि नैमित्तिकं, रक्षोघ्नेष्ट्यादिकं च काम्यं, मलमासेपि कार्यम् ॥ अन्यत्सग-तिकं शुद्धमास एव कार्यम् ॥ आरब्धकार्यस्य मलमासेप्य-नुष्ठानम् । नूतनारम्भः समाप्तिश्च न कर्तव्या । अलभ्ययोगे श्राद्धं, व्रतादिकं, नैमित्तिकं प्रायश्चित्तं, नित्यश्राद्धं ऊनमासि-कादिश्राद्धानि दर्शश्राद्धं च मलमासेपि कुर्यात् ॥,,

निर्णयसिन्धौ- "यद्यपि कालादर्शे सर्वं वार्षिकं मासद्वये का-र्यमित्युक्तं तथापि- हेमाद्रिमाधवापरार्कादिमतात् प्रथमाब्दिकं त्रयोदशे मलमासे ॥ द्वितीयाद्याब्दिकं तु शुद्धमासे एव का-र्यम् । असंक्रान्तेपि कर्तव्यमितिहातीतोक्तेः ॥ आब्दिकं प्रथमं यत्स्यादित्यादिस्मृत्यन्तरोक्तेश्च,, ॥ वर्षे वर्षे तु यच्छ्राद्धं इति-वचनं तु द्वितीयादिवार्षिकविषयम् ॥ आब्दिकं प्रथमं यत्स्या-

दिति वचनात् ॥ तथाच- "यत्र द्वादशं मासिकं शुद्धमासे भवति, तत्र त्रयोदशेऽधिके एवाद्याब्दिकं कार्यम् ॥ यत्र त्वधिकमध्ये द्वादशं मासिकं, तत्र तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धएव प्रथमाब्दिकमिति निष्कर्षः,, ॥ तेन द्वितीयादि शुद्धमासे एव, ॥ पृथ्वीचन्द्रोदये दिवोदासीये मदनपारिजातेप्येवम् ॥ (यत्रेत्यादिनिष्कर्षस्यायमाशयो मन्मतौ प्रतिभाति। अन्यथाऽन्यैःस्पष्टार्थैर्वाक्यैर्व्याघातः स्यात्) "यत्रेति-यत्र द्वादशं-द्वादशमासस्यादिदिने कर्तव्यं, मासिकं-पंचदशं श्राद्धमित्यर्थः, शुद्धमासे भवति-मलमासरहितं स्यात् । तत्र त्रयोदशे-त्रयोदशमासादौ मलमासएवाद्याब्दिकं कार्यम् ॥ यत्र तु द्वादशमासस्यादौ कर्तव्यं मासिकं पंचदशं श्राद्धमित्यर्थः मलमासे स्यात्तस्य द्विरावृत्तिं कृत्वा चतुर्दशमासादौ प्रथमाब्दिकम् इति ॥,, अथवा द्वादशमितिस्थाने "द्वादशे,, इति शुद्धः पाठः स्यात् (द्वादशमासस्यादौ इत्यर्थः) अर्थस्तु पूर्ववदेव ॥ अन्यथा द्वादशस्योनत्वात्कथं मासिकत्वं भवेत्,,॥ धर्मचिन्तामणौ वृद्धमनुः— [१] "पूर्वापरतिथी यत्र संरुणद्धि मलिम्लुचः । दिने समस्ते, श्राद्धादि तत्र कार्यं परे तिथौ ॥ पूर्वा अपरा च यत्र तिथिः सर्वस्मिन्नपि दिने मलेन व्याप्ता, तत्रापरस्यामेव तिथौ श्राद्धं विधेयम् । आदिपदेन जन्मोत्सवादिग्रहणम् । यथा- वैवदि पंशे १२ अत्रैव मलप्रवेशः शे १ । द्वि वैवदि पंशे १ अत्रैव मलनिर्गमः प्र १। अत्रैव वैशाखपंचमीश्राद्धं जन्मोत्सवादि च द्विवैवदि पंचम्यां

विधेयम् ॥ एतदेव दृष्टान्तपूर्वकमाह– "यथाह्यनुदितेऽप्यर्के नैकट्यादुदयस्य च । उषःकाले द्विजैः कर्म क्रियते सकलं तथा– ॥ अस्तं गन्तुं प्रवृत्ते च मले, शुद्धे समागते । प्रारम्भेणोदयस्यास्मिन् श्राद्धं कार्यं परे तिथौ ॥ यथार्कोदयं विनैव, उदयस्यानन्तरमेव भावित्वेन उषःकाले रात्रिशेषेऽपि दिनकार्यं विधीयते । तथैव मलिम्लुचे समाप्तिं गच्छति, शुद्धे चोदेतुं प्रारब्धे श्राद्धादि विधेयमित्यर्थः,, ॥ (२) द्वयोः पुनरेकस्यां शुद्धायां सत्यां तस्यामेव विधेयम् ॥ (३) द्वयोरेव च तिथ्योः शुद्धयोः सत्योः प्रथमपरित्यागे कारणाभावात् पूर्वस्यामेव विधेयम् ॥ (४) मलप्रवेशो यस्यां तु तिथौ सा गर्हिता मता। तस्याश्च शुद्धा घटिका नो शस्ताः श्राद्धकर्मणि ॥ (५) मलेन गन्तुकामेन समाक्रान्तापि या तिथिः। सैव शुद्धा सदा ज्ञेया पितृकर्मणि नान्यथा ॥ (६) अनाक्रान्ततिथौ विद्वान् पितृदेवक्रियां चरेत् । मलेन या वृता सा तु त्याज्या सर्वसुकर्मसु ॥ (७) सन्धियुक्तां त्यजेत्पूर्वामसन्धौ स्वतिथिः स्मृता। विहायैतां सन्धियुक्तां तयोरन्या परा स्मृता॥ परा–अग्निमा ॥

(१) [हम पहिले यह कहचुके हैं–कि किसी मासके द्वित्व होनेसे जब मलिम्लुच हो, तो श्राद्धतिथि दो बार आती है। फिर मलिम्लुच मासकी श्राद्धतिथि छोडकर शुद्धमासकी श्राद्धतिथि पर श्राद्ध करनाचाहिए॥ परन्तु यदि उपरि दर्शित उदाहरणके अनुसार मलमासके प्रवेशका दिन सारा मलसे व्याप्त हो, मलमासके निकलनेका दिनभी सारा मलसे

व्याप्त हो, और यही दिन किसीकी श्राद्धतिथि हो । जैसे वैशाखकृष्णपंचमी श्राद्धतिथि है, वहदिनभी सारा मलसे व्याप्त है। द्वितीयवैशाखकृष्णपंचमीभी सारी मलसे व्याप्त है । अब इस ऐसे विषय पर द्वितीयवैशाखकृष्णपंचमीपर श्राद्ध-करना सर्व ऋषि सम्मत है। क्योंकि द्वितीय पंचमीके अनन्तर ही मलमासका छुटकारा होता है। यथा-सूर्यके उदयसे दिन माना जाता है। मगर विद्वान् लोगभी सूर्योदयके विनाही उषः (अतिप्रातः) कालपर रात्रिशेष परभी सूर्यका उदय भावी मानकर दिनकार्य स्नानसन्ध्यादि करते हैं । ऐसे ही जिसदिन मलिम्लुचकी समाप्ति होनीवाली हो, शुद्धमासका आरम्भ होनेलगा हो, उसीमें श्राद्ध और जन्मोत्सवआदि करना चाहिए॥ (२) दो तिथियोंमें से यदि एक तिथि शुद्ध (मलरहित) हो, तो उसीमें श्राद्ध आदि करना चाहिए ॥ (३) यदि दोनों तिथियां शुद्ध ही हों तो पहिली तिथिका त्यागना निष्कारण है- पहिली श्राद्धतिथि पर ही श्राद्ध करना चाहिए । एवं जन्मोत्सवादि भी ॥ (४) मलका प्रवेश जिस तिथि पर हो, उसमें यद्यपि पहली कुच्छ घडियां शुद्ध भी हों, उन पर भी श्राद्धादि करना अच्छा नहीं ॥ (क्योंकि पूरा मल आनेवाला है) ॥ (५) मल जब निकलनेवाला हो, उससे श्राद्धतिथि कुच्छ घडियोंतक यद्यपि व्याप्त हो, तोभी वही तिथि श्राद्धकर्ममें शुद्ध समझनी चाहिए॥ (क्योंकि मलकी अल्पता है और मल निकलने वाला है)॥

(६) यदि दो तिथियोंमें से एक मलरहित हो तो विद्वान् पितृक्रिया तथा देवक्रिया उसमें करे । यदि मलसहित हो, तो सब क्रियाओंमें त्यागनी चाहिए ॥ (७) पहिली तिथि यदि मलकी सन्धिवाली हो, तो त्यागनी चाहिए । मलकी सन्धि न होनेपर अपनी तिथि मुनियोंने कहीहै । सन्धियुक्त पूर्वतिथिको त्यागकर, आनेवाली तिथि सन्धियुक्तभी श्राद्धादि कर्ममें ग्राह्य है ]॥ "मासादि निर्णयः- मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः । चन्द्रस्यैते स्मृता मासास्त्रिंशत्तिथिसमन्विताः ॥ सूर्यस्य राशिगतिर्यत्र परिमीयते स सौरो मासः ॥ अहोरात्राणां त्रिंशत्संख्या परिमीयते यत्र यज्ञादौ स सावनः ॥ ब्रह्मसिद्धान्ते-तदुक्तं- "चान्द्रः शुक्लादिर्दर्शान्तः सावनस्त्रिंशता दिनैः । एकराशौ रविर्यावत् कालं मासः स भास्करः,, इति ॥ नाक्षत्रमपि मासं केचिदिच्छन्ति । "सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते,,॥ तत्र सौरमासस्याद्यन्तौ मेषादिराशीनामाद्यन्ताभ्यां व्यवस्थितौ । सावने पुरुषेच्छादिर्नियामकः । नाक्षत्रे नक्षत्रं नियामकम् । चान्द्रस्तु दर्शान्तः पूर्णिमान्तो वेति विकल्प्यते । वचनविशेषस्तु ब्रह्मसिद्धान्ते- अमावस्या परिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्ति-पौर्णमासीभ्यां तथैव नृपवैश्ययोः इति ॥ यस्मिन्मासे पूर्णिमा चित्रानक्षत्रेण युज्यते स चैत्रः । एवमन्यमासेष्वपि । चित्रादिनक्षत्राणामुपलक्षणत्वमतः प्रत्यासन्ननक्षत्रयोगेऽपि न संज्ञाविरोधः ॥ चान्द्रादिमासानां कस्यचित् क्वचित्प्रशस्तत्वम्-

उक्तं तत् ज्योतिर्गणे-सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥ अथ स्मार्तो मलमासो भानुमासाख्यः- तस्य स्वरूपं ब्रह्मसिद्धान्तेऽभिहितम्- चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्तितः इति । मलत्वं च कालाधिक्यात् । तथाच गृह्यपरिशिष्टे-मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति । कालाधिक्यं च विष्णुधर्मोत्तरेऽभिहितम् ॥ सौरेणाब्दस्तु मानेनेत्यादि-अस्यार्थः-सौरसंवत्सरः षड्भिर्दिनैः सावनादतिरिच्यते । एकादशभिर्दिनैश्चान्द्रादतिरिच्यते । तथाच चान्द्रसंवत्सरद्वयात्सौरसंवत्सरद्वयं द्वाविंशत्या दिनैरधिकं भवति । तत ऊर्ध्वं सौरमासाष्टकं चान्द्रान्मासाष्टकात्सार्धैः सप्तभिर्दिनैरतिरिच्यते।तथाच मिलित्वा दिनार्धन्यूनो मासो भवति । सोऽयमधिको मास इति । अवशिष्टदिनार्धपूरणं च यथोक्तकालादूर्ध्वं षोडशभिर्दिनैः सम्पद्यते ॥ अतएव सिद्धान्तेऽभिहितम्-द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण पतति ह्यधिमासकः इति ॥ काम्यकर्मसु गर्हित एष मासः ॥ पुरुषस्य सूर्यस्याभावादस्य मासस्य नपुंसकत्वम् ॥ शातातपः-वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् । नैर्ऋतैर्यातुधानाद्यैः समाक्रान्तो विनाशकैः ॥ मलिम्लुचैः समाक्रान्तं सूर्यसंक्रान्तिवर्जितम । मलिम्लुचं विजानीयात्सर्वकर्मसु गर्हितम ॥ एष स्मार्तो "दर्शद्वयमतिक्रम्य यदा संक्रमते रविः । मलमासस्तदा ज्ञेयो मासे त्रिंशत्तमे भवेदित्यादिस्मृति-

दर्शितः,, । श्रौतस्तु मलमासः षडगनन्दागतो ज्योतिर्वित्प्र-
सिद्धः ॥ ,, (अन्यदपि भाषायां किंचिद्दर्श्यते) [जिन्होंने
हिमालयकी तरफ किसी देशमें जन्म पाया हो वह मलमा-
सके अधिकारी हैं॥ तथा-जिन्होने विन्ध्याचलसे पूर्वाचलके
अन्त तक और दक्षिणदिशाके अन्त तक जन्म पाया हो,
वह भानुमासके अधिकारी हैं॥ शास्त्रोंका सिद्धान्त यह है-
कि मलमासमें मरना, तथा पञ्चकमें और त्रिपुष्करमें मरना
मरेहुएके लिए अत्यन्त अनिष्ट है । इन तीनोंका उपाय वि-
ष्णुबलि आदि है ॥ पंचकादिनिर्णयः ॥
पंचक तथा त्रिपुष्करमें मरे हुए के गृहस्थजनोंका उपाय
तो यह है, कि-वह पंचकके नक्षत्र जितने शेष रहे (प्रेतको
एक समझकर) उतने, पिष्टके पुत्तल (मनुष्याकृति) बना-
कर उनको प्रेत जैसे समझकर प्रेतदेहके संस्कारोंसे संस्कृत
करके चितापर चढाकर प्रेतके साथ दाह संस्कार करें ॥
और पीच्छे शान्तिहवन भी करें। यह गृहस्थ जनको अ-
पनी विघ्नशान्तिके लिए है । प्रेतका उपाय तो विष्णुबलि
है॥ एवं त्रिपुष्करके लिए भी समझना॥ परंतु स्मृतिरहे-कि
पुत्तलोंका काम सारा तब करना चाहिए, जब कि पंचकमें
वा त्रिपुष्करमें कोई मरा हो। यदि पञ्चक लगनेसे पहले ही
कोई मरा हो, पञ्चकके मध्य दाहक्रिया भी हो, उस विष-
य पर पुत्तल न बनाने चाहिए । यद्यपि पञ्चक पर दाहक्रि-
याभी अनिष्ट ही है, परन्तु उसका उपाय ऐसा नहीं है॥

तदुक्तं– "भवतीषु ततः कश्चिद्यः प्राप्नोति मृतिं जनः इति,, "पंचके पुष्करे चैव मृतानां ननु जन्मिनाम् । पिष्टपुत्तलका-न्कुर्याच्छिष्टनक्षत्रसंख्ययेत्यादि,, ॥ "त्रिपुष्करे पंचके च मल-मासेऽपि सुन्दरि । दैवात्प्राणान्विजह्याद्यो यमलोकोऽस्य दा-रुणः ,, ॥ मरणे जनने नाशे लाभे च त्रिगुणप्रदः । त्रिपुष्कर इति शेषः [ त्रिपुष्कर क्या और कब होता है– द्वितीया, सप्तमी, द्वादशी, जब तिथि हो । तथा– पुं०, उत्तराषाढ, कृ० उत्तरफा० पूर्वभाद्र० विशाखा, यह नक्षत्र हों । सूर्य भौम जीव शनि यह वार हों, तब त्रिपुष्कर होता है ॥ ]

अष्टकाकरणाकरणनिर्णयः ।

अष्टका– "मातापित्रोरेव कुर्यादष्टकान्वष्टके अपि । पितामह्योरप्येशि पुत्राभावे चरेद्बुधः । नान्यस्य कस्यचिद्देवि हीत्थं शास्त्रविनिर्णयः,, ॥ [ माता पिताको ही अष्टका तथा अन्वष्टका करनी चाहिए । और पितामह पितामहीको भी तब करनी चाहिए, जबकि उनको अपना पुत्र न हो । और प्रथमवर्षके पीछे उनको भी नहीं । अर्थात् प्रथमवर्षतक ही उनको करे ] ॥ अष्टकानिषेधः– "गङ्गायां भास्करे तीर्थे गयायां वै महालये । मधुमत्यामष्टकया पितृहानिः सदा भवेत्,, ॥ [ गंगा, सूर्यतीर्थ गयाक्षेत्र तथा मधुमतीके तीर्थश्राद्ध पर और महालय (पितृपक्ष) के श्राद्धपर अष्टका न करनी चाहिए ॥ परंतु काश्मीर के कई लोग महालयश्राद्धपर भी अष्टका करते हैं (तन्मूलंमृग्यम्) ] मदन पारिजाते—

दौहित्रो वाथ पौत्रो वा सर्वं श्राद्धं समाचरेत्। अष्टकान्वष्टके चैव न कुर्वीत कदाचन ॥ [दौहित्रके लिये अष्टका सर्वदा निषिद्धही है, मातामहादिको उनके पुत्र न होने पर भी दौहित्र अष्टका न करे ॥ पौत्र पितामह पितामहीको उनके पुत्राभाव पर वर्षान्ततक ही अष्टका करे, अन्यथा नहीं॥] विष्णुः- "तीर्थे महालये चैव गयायां भास्करे युगे। पुत्रजन्मनि सोमार्कग्रहणे पितृपर्वसु। श्राद्धं विदध्याद्विधिवदष्टकाभिर्विवर्जितम्,, ॥ महालयमपरपाक्षिकमिति ॥ शातातपः- "महालये मन्वन्तरादौ हि पैतृकं कर्माष्टकान्वष्टकावर्जं कार्यम्,, मनुः- "कन्यागते विवस्वति तीर्थेऽपिच विशेषतः। अष्टकान्वष्टके चैव न कार्ये धर्मवृद्धये ॥ पार्वणं मातृपित्रोश्चेत्कार्यं वै पितृमुक्तये। चेन्मातृपित्रोः पार्वणं महालयादौ स्यात् तदाष्टका तयोः कार्या । अन्यत्र तीर्थादौ अष्टकानिषेधः,, ॥ [इस मनुके दूसरे श्लोकार्धसे भी यह निर्णय अनुमेय है, कि माता पिताके विना और किसीको अष्टका नहीं है ॥ अर्थका सारांश यही है-कि तीर्थ, महालय, गया, सूर्यतीर्थपर, युगनिमित्त, पुत्रजन्मनिमित्त, ग्रहणनिमित्त, पितृपर्वोंपरभी, श्राद्ध करना चाहिए, परंतु अष्टकाके रहित ॥ यह विष्णुवचन है ॥ महालयपदसे अपरपाक्षिकका अर्थ है ॥ शातातपका वचन भी यही है कि- महालयादिपर पैतृककर्म अष्टकारहित करना चाहिए। मनु- सूरज जब कन्याराशिमें हो (महालयहो) तथा तीर्थ हो धर्मवृद्धिके लिये अष्टका

नहीं करनी चाहिए॥ परंतु मातापिता का पार्वण (वार्षिक) श्राद्ध यदि अपरपक्षमें आवे, तो उनको अष्टका अवश्य वार्षिकश्राद्धनिमित्त करनी चाहिए] ॥ "वर्तमानेऽपि पितरि मृतिं याति पितामहे। पौत्रः पुत्रायते, कुर्याद्वपनमष्टकामपि ॥ अत्र पितरि परदेशे वसति, तदायं विधिः ॥ पूर्वं मृते तु पितरि, तदनु च पितामहे। पौत्रो ऽष्टकां च कुर्वीत॥ "वपनं सप्तसु स्मृतमिति,, वचनान्न वपनविधिः पौत्रस्य । एवं पितामह्या अपि,, ॥ [पिता जीवित हो, मगर परदेशमें हो, पितामह मरे, तो पौत्र ही पुत्रवत् रहता है । अतः ऐसी दशामें वपनभी तथा अष्टकाभी करे॥ परंतु पिता जब पहिले मरचुका हो, उसके पीछे पितामह मरे, तो पौत्र अष्टकातो करे, मगर इस दशामें वपन न करना चाहिए। क्योंकि वपनके विषय सात ही हैं॥ (गंगा, सूर्यक्षेत्र, माता, पिता, तथा गुरुके क्षयाह पर, मधुमती, और यज्ञ पर वपन लिखा है] ॥ मदनपारिजातमें— "अष्टकान्वष्टकाश्राद्धमग्निग्रहणमेव च। एक एवौरसः कुर्यान्न दौहित्रो न कन्यका,, इति ॥ [एक ही औरसपुत्र मातापिताके श्राद्धादि पर अष्टका अन्वष्टका तथा अग्निग्रहण करे। दौहित्र अथवा कन्या (दायहर बनने पर भी) अष्टकादि न करे] धर्मचिन्तामणौ— "अग्न्यनधिकारिणामन्नभोजने दोषं प्रस्तुत्य 'पुत्रिका कुरुते श्राद्धं साग्निकस्यापि, सा पुनः। नाग्नावधिकृता, तस्या अपि स्याद्दोषदूषितम्,, अन्नमितिशेषः॥ उत्तरम्- तथाच नास्त्येव,

तदन्नस्य शुद्धत्वे अविवादात् । नन्वग्निनैव शुद्धिर्भवति इति, तद्व्यतिरेके केन शुद्धिः स्यादित्यत आह- "शुद्धिः स्यात्तत्र हि ध्रुवम् । वैश्वदेवेनेत्यादि० ॥ (अत एवैतत् ज्ञायते, अपुत्रस्य पित्रादेः श्राद्धे आत्मजाया दौहित्रस्य भागहारित्वेऽपि नाष्टकादिवैशिष्ट्यं किंतु वैश्वदेवमात्रमेवेति,,)॥ [इसका सारांश यह है कि पुत्रिकाको माता पिताके श्राद्ध पर अग्निका अधिकार नहीं है। तथा दौहित्रको भी मातामहादिके श्राद्धपर अष्टकाका अधिकार नहीं है । वैश्वदेवमात्रके करनेसे ही उनका अन्न पवित्र होता है]॥ स्मृतिसारे- "द्वासप्ततिश्राद्धकाले त्वष्टका निषिद्धा । चेत्पार्वणं तत्र विधिविशेषः ॥ ,,

अशौचनिरूपणम ॥

धर्मसंकोचनिमित्तमशौचकालो निरूप्यते- (मदनपारिजाते)
१. "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अतऊर्ध्वं प्रसूतिः स्याद्दशाहं तत्र सूतकम्-इति ॥ स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ॥ स्नानमात्रं पितुस्तु स्यात् ॥ पाते मातुर्यथामासम ॥ पित्रादीनां दिनत्रयम् । इतिमरीचिः,, ॥ सप्तममासप्रभृति प्रसवरूपत्वात्पूर्णाशौचमेव भवति ॥ २.
तत्र मृतजाते जातमृते वा सपिण्डानां जन्मनिमित्तं सम्पूर्णाशौचमस्त्येव ॥ यथाह हारीतः- "जातमृते मृतजाते वा सपिण्डानां दशाहमशौचम् इति,, ॥ यच्च जाते मृते, मृते जाते, कुलस्य सद्यः शौचमिति बृहद्विष्णुवचनम्, तत्तु शिशुमरणनिमित्ताशौचाभावप्रतिपादनपरम् । न प्रसवहेतुकस्य ॥

मरणनिमित्ताशौचमपि स्नानादपैति ॥ ३. नाभिच्छेदात्प्राक् मरणे मातुः संपूर्णं सूतकम् ॥ पित्रादीनां तु जननिमित्ताशौचं त्रिरात्रम् ॥ तथाच बृहन्मनुः– "जीवञ्जातो यदि मृतस्ततः सूतकमेवतु । सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् इति,, ॥ ततः– तदनन्तरमेव नाभिवर्धनादर्वागित्यर्थः । नाभिवर्धनोत्तरकालं तु शिशूपरमे पित्रादीनां जननाशौचं सम्पूर्णमेव ॥ "यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते इति,, ॥ ४. जनननिमित्तमस्पृश्यत्वं मातुर्दशाहादिकम्, पितुस्त्वस्पृश्यत्वं सचैलस्नानादपगच्छति ॥ सपिण्डानामस्पृश्यत्वं नास्तेव ॥ ५. पैठीनसिः– "सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत्, मासेन स्त्रीजननीमिति,, ॥ इति जननाशौचम् ॥ अथ मरणाशौशम्– १. अनुपनीतस्य प्राक् नामकरणान्मरणे सद्यः शौचमेव। नामकरणानन्तरमग्न्युदकदानं वैकल्पिकम् एवमुपनयन पर्यन्तं मातापित्रोस्त्रिरात्रमितरेषां सपिण्डानामेकाहमशौचम् ॥ "अजातदन्ते तनये शिशौ गर्भच्युते तथा । सपिण्डानां तु सर्वेषामेकरात्रमशौचकमिति,, यमस्मरणात् ॥ २. वैकल्पिकोऽपि संस्कारस्तूष्णीमेव– अमंत्रकमेवेत्यर्थः ॥ धर्मचिन्तामणौ– बालकेऽनुपनीते यो मृते कुर्यात्क्रियादिकम्– स महापातकी, तस्य दानात् (क्षीरादेः) तृप्तिरमन्त्रकम् ॥ न पुनः श्राद्धं कुर्यादित्यर्थः । ३. ऊनद्विवर्षस्याग्निसंस्काररहितस्य निखननमेव ॥ तथाच याज्ञवल्क्यः– ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।

आ श्मशानादनुव्राज्य इतरो ज्ञातिभिर्वृतः इति ॥ इतरः– पूर्णद्विवर्षः ॥ ४. जातदन्तस्य प्रथमवर्षे अकृतचूडस्य वर्षत्रयाभ्यन्तरे मृतस्याग्निसंस्कारे सत्यपि एकाहः । "जातदन्तेष्वकृतचूडे त्वहोरात्रेण शुद्धिरिति,, विष्णुस्मरणात् ॥ प्रथमवर्षे चूडाकरणे त्वग्निसंस्कारस्य चूडाकरणानन्तरं नियतत्वात्त्रिरात्रमेव ॥ ५. स्त्रीणां मृतौ वाग्दानादर्वागेकाहः । वाग्दानादूर्ध्वं विवाहसंस्कारात्प्राक् पतिकुले पितृकुले च त्रिरात्रम् ॥ विवाहानन्तरं संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे ॥ तत्प्रसवमरणे चेत्पितृगृहे स्यातां, तदैकरात्रं त्रिरात्रं चेति । प्रसवे एकरात्रं, मरणे त्रिरात्रमिति विवेकः ॥ ६. धर्मचिन्तामणौ– पुत्रत्वेन वृता कन्या १ द्यामुष्यायणः, मातामहसम्बद्धो दौहित्रो द्वितीयो द्यामु०, उभयसम्बद्धस्तृतीयः, स्वात्मनि सति या पुत्रिका स्वमात्मानं विमोक्तुं स्वकीये पितृपक्षे यं स्थापयति स चतुर्थो द्यामु०, पुत्रभूतकन्यामरणे सति यस्तस्याः पुत्रः कन्या वा श्राद्धं तत्पितृपक्षे सम्पादयति स पंचमः, तथाचोक्तम्- जीवितान्ते तु तत्पुत्र इत्यादि । पुत्रिकापुत्रसन्तानाभावे तद्भ्रात्रादिः षष्ठः, इत्येते द्यामुष्यायणभेदाः षट् सम्पद्यन्ते । एतेषां द्यामुष्यायणानां यावज्जीवं गोत्रद्वयाशौचम्, मरणे तु गोत्रद्वयविषये सापिण्ड्यकरणं विहितमिति सिद्धान्तः ॥ ७. दत्तके आनीते कृतचूडाकर्मणि चाष्टमासानन्तरं मृते च सति दाहार्हतया तद्दाहादिकरणादेव पित्रोराशौचमेकाहमेव ॥ मेखलाहोमे कृतेऽपि ऋषिब्रह्मपूजनात्प्राक् दत्तकस्य

मृतस्याशौचमेकाहमेव । नहि गोत्रिणाम् ॥ ऋष्यादय एव गोत्रदानेऽधिकारिणः, अतस्तत्पूजनानन्तरं गोत्रिणोऽपि पूर्णाशौचभाज इति ॥ ८. स्यालश्चेद्दत्तकत्वेन पुत्रः स्यात्, पातयेत्कुलम् । तत्पुत्रस्तु (दत्तकः) स्वर्गदाता न स दूष्यः कदाचन ॥ एकजातिकस्यान्यवृक्षादेरानीता शाखाऽन्यस्मिन्वृक्षे विधिना रोपिता प्ररोहं प्राप्य यथा क्षीरनीरवदविभक्ता समरसैवाभिन्ना भवति, तद्वदन्यत एकवर्णात् विशेषतः स्वकुलजाद् गृहीतो (दत्तकः) सुतो भवति ॥ ९. अत्रविशेषमाह–क्षीरकण्ठो ऽत्र जननीस्तनपायी विशिष्यते (दत्तकत्वेनेतितात्पर्यम्) संस्कृतश्चेदथानीतः स न तृप्तिप्रदो भवेत् ॥ संस्कृतः–कृतोपनयनादिसंस्कारः। आनीतः– दत्तकपुत्रत्वेन स्वीकृतः ॥ ननूपनीतपरगोत्रजपुत्रग्रहणे का हानिरित्यत्राह संस्कृत इति॥ तर्हि वसिष्ठवाक्येन विधवायाः पुत्रदाने पुत्रादाने वाऽनधिकृतायाः का गतिरित्यत्राह– "मृते भर्तरि नाद्द्यात्परगोत्रजमात्मना । सगोत्रजं वा गृह्णीयात्पुत्रिकापुत्रमेव वा,, ॥ ननु परगोत्रजश्चेदानीयते, स कीदृशः आनेयः, सच किं कर्म कर्तुमर्हति नवेति सन्दिहानं प्रत्याह– "अजातदन्तमकृतचूडं वा भिन्नगोत्रजम् । आददीत, न पौगण्डं (कौमारावस्थातीतं) कुर्याद्विष्णुबलिं च सः ॥ श्राद्धादिकर्म सकलमिति शास्त्रेषु घोषणा ॥ १०. ननुचेदस्यास्तनूजा भवेत्सा किमौर्ध्वदैहिकादि कर्म कर्तुमर्हति नवेत्यत्राह–अभ्रातृका वा पुत्री स्यात्सैव तद्भागमर्हति ॥ ११. विधवानीतपुत्रस्य निजगोत्रिणैव संस्कारः

कारयितव्यः नतु परगोत्रिणा "सगोत्रिणैव संस्कारं कारयेन्नान्यगोत्रिणा । इत्थं स्मृतिपथा पुंभिर्गन्तव्यं नान्यथा बुधैः,, ॥ १२. "स्वगोत्रजा भ्रातृजाश्च पितृव्यज सपिण्डजाः। पौत्र एते पंचपुत्रा उपनीताश्च तारकाः,, उपनीता अप्येते आनीताः पुत्रकार्यं कर्तुं शक्ताः ॥ दौहित्रः पितृभगिनीसुतो मातुलपुत्रकः। जननीभगिनीपुत्रो भगिनीपुत्र एव च ॥ एते पंचपुत्रा अनुपनीता एवानीतास्तारयन्ति, नतूपनीताः ॥ १३. आधारस्तम्भैकगृहवासिनां भिन्नगोत्रिणामशौचनिर्णयः- एकस्मिन्सद्मनि स्यातां गृहस्थौ भिन्नगोत्रिणौ। यद्येतयोस्तु कदाचिच्चैको यमगृहं गतः ॥ द्वारदक्षिणदेशस्थे प्रेतकुम्भे विगोत्रिणः । अशौचरहितस्यापि नाधिकारस्तदा क्वचित् ॥ श्राद्धादौ, तत्र निलयेऽन्यत्र कार्यं हि यद्भवेत्- तेन श्राद्धाद्यन्यत्र कार्यमित्यर्थः, गृहस्थमरणात्तद्धादीनां वैमुख्यात्। विघ्नकारिणां यमदूतादीनां सामीप्याच्चेत्यर्थः ॥ भिन्ने त्वाधारस्तम्भे स्वगृहेपि न दोषः । एवं सूतकेऽपि ज्ञेयम् ॥ १४. सूतिकार्थं प्रेतार्थं च यत्र चुल्ल्यामन्नपाकस्तत्राप्याशौचं दशाहं वर्तते ॥ १५. एतज्जननं मरणं च ज्ञातमेवाशुचित्वापादकम् ॥ "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेदिति मनुस्मरणात्,, ॥ दशाहादिकालनियम उत्पत्त्यादिप्रभृत्येव ॥ रात्रावेव समुत्पन्ने मृत्यौ रजसि सूतके। पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥ अन्येप्यत्र विकल्पाः । परन्तु काश्मीरिकाचार एष एव॥ १. प्रोषितस्य जनने मरणे वाऽशौचम्-

मनुः- निर्दशजननश्रवणे पितुः सचैलस्नानाच्छुद्धिः ॥ प्रोषितमरणे तु "प्रोषिते कालशेषः स्यादिति,,—अशौचमित्यर्थः कालशेष एवाशौचं, न श्रवणप्रभृति पुनर्दशाहादिकमित्यर्थः ॥ दशाहाद्यनन्तरं मासत्रयपर्यन्तं त्रिरात्रम् ॥ ततः षण्मासपर्यन्तं पक्षिणी ॥ ततो नवमादर्वागेकाहः ॥ ततः संवत्सरपर्यन्तं स्नानोदकाभ्यामेव शुद्धिः ॥ संवत्सरानन्तरं स्नानेनेति ॥ २. एतन्मातापितृव्यतिरिक्तविषयम्-अत एव पैठीनसिः- "पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् इति,, । सूतकी भवेदित्यनेन प्रेतकार्यकर्तव्यतां दर्शयति ॥ ३. अथ प्रोषितमृतदाहविधिस्तदशौचं च- प्रोषितादिमृतशरीरालाभे तदस्थिभिः प्रतिकृतिं कृत्वा, अस्थ्नामप्यलाभे स्वगृह्योक्तप्रकारेण पर्णशरैः प्रतिकृतिं कृत्वा दाहः कार्यः ॥ तत्राहिताग्नेर्दशाहमशौचम् । अनाहिताग्नेस्त्रिरात्रम् ॥ ४. वृद्धविष्णुः- "ग्राममध्यगतो यावच्छवस्तिष्ठति कस्य चित् । ग्रामस्य तावदाशौचं निर्गते शुचितामियात्,, ॥ अनेन न्यायेन नगरेपि स्वस्ववेथ्यां यावच्छवस्तिष्ठति तावदशौचमिति ज्ञेयम् ॥ अशौचसन्निपाते निर्णयः—

१. शावाशौचमध्ये शावाशौचे, जननाशौचमध्ये जननाशौचे, तत्समे न्यूने वा सति, (नत्वधिके) पूर्वाशौचेनैव मध्यपतितस्य निवृत्तिः ॥ "अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति,, ॥ २. विशेषः- जननाशौचमध्ये तु शावाशौचे सति शावाशौचमेव सम्पूर्णं कार्यम् । तदुक्तं- "शावाशाचे समुत्पन्ने सूतकं

तु यदा भवेत्। शावेन शुध्यते सूतिर्न सूतिः शावशोधनी ॥,, "सूतके मृतकं चेत्स्यान्मृतके वाथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्,, ॥ (समसंख्याकदिनापनोद्याशौचविषयमेतत्) ततश्चायमर्थः सिद्धः- शावाशौचे वर्तमाने यदि तेन तुल्यकालापनोद्यं शावं सूतकं वा अशौचं जायते तदा पूर्वेणैव शुद्धिः ॥ यदा तु स्वल्पकालापनोद्ये शावे वर्तमाने बहुकालापनोद्यं सूतकं मृतकं वापद्येत। यदिवा सूतकेन वर्तमानेन मृतकं तुल्यकालिकमेवापद्येत। तदोत्तरेणैव शुद्धिः ॥
३. "रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिस्तथेति,, विशेषोऽपि गौतमेनोक्तः- अयमर्थः- रात्रिरेव शेषो यस्याशौचस्य तस्मिन्सति यदा पूर्वप्रकारकमशौचान्तरमापद्येत तदा द्वाभ्यामहोरात्राभ्यां तस्य शुद्धिः। प्रभाते तस्यां रात्रौ व्युष्टायां पुरा सूर्योदयादाशौचसन्निपाते त्रिभिरहोरात्रैः शुद्धिरिति ॥ न पूर्वशेषेणैव ॥ शातातपः- "रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्,, ॥ आद्यं भागद्वयमित्यादेरप्ययमेवाशयः॥
४. तथा- मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिस्स्यान्मातुः कार्या तु पक्षिणी ॥ पितुः शेषेणेति- पित्राशौचकालेनैव शुद्धिर्न मात्राशौच-शेषेणेत्यर्थः । पित्राशौचकालमध्ये तु माता यदि म्रियते तदा पित्राशौचसमनन्तरं मातुः पक्षिणीं कुर्यादिति तात्पर्यम् ॥ पक्षिणी-दिनद्वयम् ॥
५. इयं च शुद्धिः सूतिकामग्निदं च हित्वेतरसपिण्डानाम् । "सूतिकामग्निदं हित्वेत्यघसंग्रहे स्मरणात्,, ॥ ६. "अन्तर्द-

शाहे जननं पश्चात्स्यान्मरणाद्यदि । प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः,, ॥ "आद्यं श्राद्धमशुद्धो ऽपि कुर्यादेकादशे ऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि । स एव दिवसस्तस्य श्राद्धशय्यासमाधिषु,, ॥ "प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत्। तथैवाशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि ॥ इति शातातपः,, ॥ (अत एव "कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः,, इति स्मृत्या और्ध्वदेहिकमेकादशाहःकृत्यं पुनर्जननाशौचसंपातेऽपि कुर्वन्ति विद्वांसः )॥ "एवमेव शावाशौचसन्निपातेऽपि,, ॥ प्रजापतिः– "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति॥,, जातकर्मादिकर्मणि तात्कालिकी शुद्धिः ॥ ७. सूतकाद्याशौचे सन्ध्याया न स्वरूपतः परित्यागः । अपितु मंत्रोच्चारणपूर्विकायाः । पुलस्त्येन प्राणायामरहित मानसिकसन्ध्याभ्यनुज्ञानात् । "सूतके मृतके चैव सन्ध्याकर्म न संत्यजेत् । मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विजः,,॥ योगीश्वरः– "सन्ध्यां स्नानं त्यजन्विप्रः सप्ताहाच्छूद्रतां व्रजेत् । तस्मात्स्नानं च सन्ध्यां च सूतकेऽपि न संत्यजेत्,, इति ॥ "सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्,, इत्याह पैठीनसिः ॥ ८. सूतकादौ ग्रहणे जाते स्नानदानश्राद्धादौ न दोषः ॥ ९. अज्ञानादपि सूतकाद्यशौचान्ने भुक्ते सति पश्चादशौचे ज्ञाते प्राप्तं श्राद्धं सूतकान्ते एव कार्यम् ।

पश्चादपि चेन्न ज्ञातं तदा कार्यमेव ॥ "उभाभ्यामपरिज्ञाते सूतको नैव दोषकृत्। एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्," उभाभ्यां दातृभोक्तृभ्याम् ॥ १०. षट्त्रिंशन्मते– विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके। अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। प्रारब्धे सूतकं न स्यादनारम्भे तु सूतकम् ॥ मृतकस्यापि उपलक्षणम् ॥ प्रारम्भो वरणं यज्ञे संकल्पो व्रत सत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिष्क्रिया॥ वृद्धशौनकः– कर्मणि क्रियमाणे तु मध्ये चेत्सूतकं भवेत् । यावत्कर्मसमाप्तिः स्यात्तावन्नैवास्ति सूतकम् ॥ विष्णुबलौ तु– विष्णुक्रिया यदह्नि स्यात्स श्राद्धारम्भ एवच । विष्णुक्रिया कृता चेत्स्यात्तदा कर्म न संत्यजेत् ॥ विष्णुक्रियेति प्रथमप्रायश्चित्तकर्मणोप्युपलक्षणभूता ज्ञेया । तेन प्रायश्चित्तमपि कृत्वाऽशौचे पतिते सति विष्णुश्राद्धं कार्यमेव। सूतके मृतके वापि विष्णुश्राद्धं प्रकल्पयेदित्युक्तत्वात्॥ मोहात्कर्मत्यागे ऋत्विक्कर्तृप्रेतानामनिष्टम् ॥ यज्ञादिवृतानां ब्राह्मणानां तद्वरणेनैव यजमानस्य चाशौचाभावः ॥ एवं श्राद्धादिषु दातृभोक्त्रोर्वेदितव्यः ॥ विष्णुः– न देवप्रतिष्ठोत्सवविवाहेषु पूर्वसंकल्पितेषु, न देशविभ्रमे, नापद्यपि चाशौचमिति ॥ ११. प्रारम्भाभावेऽपि कन्याया अबालत्वे सन्निहितलग्नान्तराभावेऽपि च विष्णुनैवाभ्यनुज्ञा दत्ता ॥ अनारम्भविशुद्ध्यर्थं कूष्मा-

एडैर्जुहुयाद् घृतम् । गां दद्यात्पंचगव्याशी ततः शुध्यति सूतकी ॥ कूष्माण्डैर्मंत्रैः ॥ १२. दैये पितॄणां श्राद्धे तु अशौचं जायते यदि । तदाशौचे व्यतीते तु तेषां श्राद्धं विधीयते ॥ शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते । सातिथिस्तस्य कर्तव्या नत्वन्या वै कदाचनेति ऋष्यशृङ्गः ॥ यदि तु अशौचापगमेप्यन्यो मलमासादिविघ्नो जायेत तत्राह राजमार्तण्डे- श्राद्धविघ्ने समुत्पन्ने ह्यन्तरा मृतसूतके । एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥ श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते तथा। अमावस्यां प्रकुर्वीत वदन्त्येके मनीषिणः इति ॥ (भाषामें भावार्थमात्र यह है तथा अलग २ दिखाने के लिये यह नम्बर हैं, संस्कृतके साथ क्रम नहीं है) १. अशौच दोप्रकारका होता है, प्रथम जननाशौच- अर्थात् सूतक । और दूसरा मरणाशौच जिसको पातक भी कहते हैं ॥ २. एक वंशके मूलपुरुषसे लेकर सातवीं पीडी तक सपिण्डसंज्ञा होती है । आठसे १४ तक समानोदक कहलाते हैं। १५ से २० तक सगोत्र कहे जाते हैं ॥ गर्भस्रावाद्यशौचव्यवस्था ३. चार महीने तक गर्भके गिरनेको गर्भस्राव कहते हैं । पांचवे और छठे मासमें गर्भपात, और उसके उपरान्त प्रसव कहते हैं । तीन मासके भीतर किसीभी मासमें गर्भके गिरनेसे गर्भिणीको ३ दिनका, और चौथे मासमें चार दिनका अशौच रहता है॥ पिता आदि सपिण्ड केवल स्नानमात्रसे शुद्ध होजाते हैं॥ पांचवें और छठे मासमें गर्भपात हो,

